श्रा ओं श्रीगणेशायनमः प्रसीदंतुसनोहरिस्त्रिदशवैरिसीमंतिनीनवीनविधवाजनव्रतविधानदीक्षागुरुः यदीयपदपंक

१ जस्मरणवीतसर्वैनसः पुनर्भवगतागतं जहातिवीतमोहाबुधाः १ चिरंतनानेकनिबंधसिद्धः सुसंप्रदायानुगतः स्फु

टार्थः॥ नत्वाहरिं रुद्रधरेणसम्यग्वितन्यते श्राद्धविवेकएषः २ श्राद्धंनामवेदबोधितपात्रालंभनपूर्वकप्रमीतदेवतो

द्देशको द्रव्यत्यागविशेषः तच्छ्राद्धमिहस्वरूपभेदेतिकर्तव्यताकथनमंत्रनिर्णयविहितनिषिद्धदेशकालद्रव्यब्राह्म

णादिकथनेनविविच्यते तत्रादौ संक्षेपतः स्वरूपभेदः कथ्यते। तत्रबृहस्पतिः नित्यंनैमित्तिकंकाम्यंवृद्धिश्राद्धंतथैवच

पार्वणंचेतिमनुनाश्राद्धंपञ्चविधंस्मृतम्। एतद्विवृतंभविष्यत्पुराणे। अहन्यहनियच्छ्राद्धंतन्नित्यमितिकीर्तितं वैश्व

देवविहीनंतदशक्तावुदकेनतु। एकोद्दिष्टंतुयच्छ्राद्धंतन्नैमित्तिकमुच्यते। तदप्यदैवंकर्तव्यमयुग्मान्भोजयेद्द्विजान्। का

मायविहितंकाम्यमभिप्रेतार्थसिद्धये पार्वणेनविधानेनतदप्युक्तंखगाधिप। वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते। स

र्वंप्रदक्षिणंकार्यंपूर्वाह्णेतूपवीतिना। अमावास्यायांयत्क्रियतेतत्पार्वणमुदाहृतं। क्रियतेवापर्वणियत्तत्पार्वणमि

तिस्थितिः। अत्रनैमित्तिकपदेनषोडशप्रेतश्राद्धान्यपिसंगृह्यंते। एकोद्दिष्टरूपत्वात्तेषां। पार्वणपदेनगोष्ठीश्राद्धाद्यपि राम

स्मृत्यंतरेणोक्तंसंगृह्यते। तेषांसर्वेषांपार्वणविधिनाविधानात्। अत्रयद्यपिपर्वणिभवंपार्वणमितिव्यु[illegible]त्यापिसुर १

त्तिमात्रमिदं सिद्धं विस्तुतो देवश्राद्धपूर्वकषट्पुरुषश्राद्धं पार्वणं अतएवस्मर्याहे पार्वणं कुर्वन्नधो धो याति मानवः यतिश्रा
द्धं निषिद्धम् अहन्येकादशे श्राद्धे पार्वणं तु विधीयत इत्यादिस्मृतिषु देवश्राद्धपूर्वकषट्पुरुषश्राद्धविषयतयैव निषेधो विधि
श्चोपपद्यते। अन्यथा पर्वव्यतिरिक्तकाले पार्वणस्यासंभवाद्विधिनिषेधानुपपत्तिः स्मृतिसारमहार्णवहलायुधकल्पत
रुपितृभक्तिषु स्मृतिनिबंधेष्वपि औरसक्षेत्रजाभ्यां साग्निकाभ्यां मृताहे पार्वणं कर्त्तव्यमिति यल्लिखितं तदपि संगच्छते। अ
न्यथा तद्वचनसंभवादयुक्तमेव स्यात्। लोकेपि च प्रामाणिकास्त्वापरपक्षीयप्रतिपदादिश्राद्धेष्वपि पार्वणपदं प्रयुंजते। श्रा
द्धारंभे प्रथमं श्राद्धीयद्रव्यसेकः। तत्र नाप्रोक्षितं स्पृशेत्किंचिच्छ्राद्धे दैवे च कर्मणीत्यत्र न स्पृशेन्न दद्यादित्यर्थः अनेन वा
क्येन प्रोक्षणप्राप्तौ तत्र पुंडरीकाक्षोच्चारणेनेति। क्वचिन्निबंधे लिखितं। पुंडरीकाक्षस्मरणेनेति क्वचित्। तत्र। शंखचक्र
धरं विष्णुं द्विभुजं पीतवाससं प्रारंभे कर्मणां विप्र पुंडरीकं स्मरेद्धरिमिति मूलवाक्यं। तत्र स्मरणमेव विहितमस्ति तथाप्यु
च्चारणस्य स्मरणपूर्वकतया। उच्चारणे स्मरणमायात्येवेत्यविरोध एवेत्याचारानुगृहीतमुच्चारणं क्रियते। तत्राविरुद्ध
फलकीर्त्तनमपि क्रियते। स्मत्संप्रदाये। तेन पुंडरीकाक्षः पुनात्वित्युच्चार्य द्रव्यसेकः। ततः संकल्पः। तत्राद्यपार्वणश्रा
द्धमहं करिष्य इति पितृभक्तौ संकल्पः अस्मत्संप्रदाये तु तिथ्युल्लेखपूर्वकः पित्रादीनां प्रत्येकं गोत्रसंबंधिपदानामनुकी

श्रा· ंनपूर्वकः संकल्पः क्रियते तत्र नामगोत्राद्युच्चारणपूर्वकः संकल्प इति युक्तः पक्षः तथाहि नांदीमुखे विवाहे च प्रपिता
२ ऽह पूर्वकं। वाक्यमुच्चारयेत्तस्मात्तोऽन्यत्र पितृपूर्वकमित्यनेनानुपूर्वीविशेषस्य कथनात् सामान्यतः पित्राद्यानुपूर्वी प्रा
प्यते सा नियम्यते। अत आनुपूर्व्या उच्चारणं प्राप्तं। गरुडपुराणादौ श्राद्धप्रयोगलेखने पित्राद्युच्चारणवाक्यं स्फुटमे
वा। तत्र तिथिविशेषादेः श्राद्धप्रयोजकतया देशकालोत्कीर्तनमप्युपयुज्यते। तथा चाद्यामुकमासीयामावास्यायाम
मुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणाममुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहा
नाममुकामुकशर्मणां पार्वणश्राद्धमहं करिष्ये इत्येवं संकल्पः कर्तव्यः। अत एव पितृभक्तावेकोद्दिष्टश्राद्धे नित्यश्रा
द्धे चास्मल्लिखितक्रमेणैव संकल्पवाक्यं लिखितं ततो गायत्रीजपः तत्रोपविश्य जपेद्धीमान् गायत्रीं तदनुज्ञयेति
यद्यपि वारसंख्या न श्रूयते तथापि स्थानांतरीयगायत्रीजपादौ प्रायशो वारत्रयाभिधानेनात्रापि वारसंख्याकांक्षा।
यां सेवोपतिष्ठत इति प्रामाणिकाचारोपष्टंभेन वारत्रयं जपः। जपे च विशेषः। केचित्प्रणवव्याहृतिरहितां शुद्धामेव गा
यत्रीं जपंति। केचित्प्रणवव्याहृतिपूर्वां जपंति। तत्र द्वितीयः पक्षो युक्तः। तथाहि प्रणवः पूर्वमुच्चार्योंभूर्भुवः स्वस्ततः परं राम·
गायत्री प्रणवश्चांते जप एवमुदाहृतमिति योगियाज्ञवल्क्यवाक्येन गायत्रीजपविधाने सर्वत्र प्रणवव्याहृतिपूर्वक २

तयाम्नवस्यापितत्वात्। न चान्नोत्सर्गानंतरं सप्रणवां सव्याहृतिकां गायत्रीं जपेदिति कात्यायनसूत्रे प्रणवव्याहृतिसाहित्य
भिधानादन्यत्र तयोरसाहित्यं पर्यवस्यतीति वाच्यम् वाक्ययोर्भिन्नवक्तृकत्वात् तथाहि प्रथमं गायत्रीजपविधायकं ब्रह्म
पुराणवाक्यं द्वितीयं जपविधायकं कात्यायनसूत्रम् एकवक्तृके च विधाने विशेषविधिः शेषनिषेधाभ्यनुज्ञाफलको भव
ति पुराणे सर्वशाखाप्रत्ययमेकं कर्मेति न्यायात् योगियाज्ञवल्क्यवाक्ये विहितप्रणवव्याहृतिसाहित्यस्यावश्यकोपस्थि
तेश्च न च तत्साहित्यस्यावश्यकोपस्थितौ कात्यायनसूत्रे तत्साहित्याभिधानमनर्थकमापद्येतेति वाच्यम् कात्यायनसूत्रकलाः
कल्पे च न्यायलभ्यस्य प्रमाणांतरसिद्धस्य चार्थस्यैकोक्तस्याभिधानम् तेन तत्साहित्ये सूत्रस्यानुवादकता परिभाषावाक्येनै
व साहित्यप्राप्तेः सिद्धत्वात् तस्मात्प्रणवव्याहृतिसहिताया एव गायत्र्याः प्रथममपि त्रिर्जपः सुगतिसोपाने त्रिरिति स्फुटमेवो
क्तम् तत्र देवताभ्य इति त्रिर्जपः तत्रापि संप्रदायभेदः देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमे
वक्ष्मोनस्वद्रूविवाजसनेयिभिः पठ्यते नमः स्वधायै स्वाहायै नित्यमेव भवंत्विति तु सामगैः पठ्यत इति केषांचिद्विभागः केषांचि
द्वैपरीत्येन विभागः तत्रास्माकं प्रथमः पक्षः तत्रोपदेश एव शरणम् ततश्चासनोत्सर्गः स निर्विवादः ततश्चावाहनम् तत्रापात्रकेण
[illegible] श्राद्धे विश्वान्देवानहमावाहयिष्ये पितॄनहमावाहयिष्य इति प्रश्नः क्रियत इति संप्रदायः ततोऽर्घकरणं तत्र शन्नोदेवीरिति
जलप्रक्षेपः तिलोसीति तिलप्रक्षेपः तत्र स्वाहांतोयं मंत्रो वाजसनेयिभिः पठनीयः वाजसनेयिकल्पे कात्यायनसूत्रे स्वाहांतस्ये
[illegible]चटमात्रं न च लिपिमात्रम् अत्र शरणं परंपरासिद्धत्वादुपदेशस्य गुणिसर्वस्वनाम्नि मंत्रव्याख्याने ग्रंथे पितृदेशपतनपास्वधा

श्रा तोयंमंत्र इति भ्रमो हेयः कात्यायनसूत्रे स्वाहांतस्यैवोपदेशादित्यभिधानेनोपदेशस्यपरंपरासिद्धतयास्थैर्यात् अत्र पवित्रोप
रिजलांतरं वाजसनेयिनः केचिद्वदंति सामगानामुदकांतरदानमेनदिति कृत्वा न केचिद्वदंति तत्र दत्तदर्भोदके हस्ते विप्रेभ्यश्च
पृथक्पृथगिति वायुपुराणवाक्यप्रमाणनियामकाभावादिति सर्वेषां यजुर्विदामपि जलांतरदानमुचितं ततो पादिव्याद्
ति पाठः तत्र आपःशिवाःसठं स्योनासुहवइत्यात्र केचित्प्रथमं तालव्यशाकारं पठंति केचित् ठं कारं मूर्धन्यं दन्त्यमेव सकारं
पठंति तत्र यजुर्विदा ठं कारसंहितोत्यदंत्यः सकारः पठनीयः यजुर्वेदीयत्वाद स्य मंत्रस्य दंत्य सकारोपि परंपरोपदेशास्थै
यादिति ततोर्घोत्सर्गः तत्रोत्सर्गवाक्ये प्रथमं युष्मत्पदोच्चारणम् ततो देयद्रव्योच्चारणम् असावेषतेऽर्घ इति कात्यायनेना
नुपूर्वी विशेषोपादानात् तथाच एष वो हस्तार्घः एषते हस्तार्घ इति वाक्यम् ततः पित्राद्यर्घपात्राणां न्युब्जीकरणं तत्र प्रपि
तामहार्घपात्रस्थमवशिष्टजलादि पितामहार्घपात्रे कृत्वा तदपि पितार्घपात्रे कृत्वा ओं पितृभ्यः स्थानमसीति एकदेव पात्र
पस्याधोमुखस्य वामप्रदेशेऽवस्थापनं केचित्प्रथमं पितृपात्रं न्युब्जीकृत्य तदुपरि पितामहपात्रं तदुपरि प्रपितामहपात्रं
न्युब्जीकुर्वंति एतत्तु न मनोरमम् पितृभ्यः स्थानमसीति न्युब्जीपात्रं विदधातीति कात्यायनेन त्रयाणामेकदैवस्थापनविधा
नात् ततो गंधादिदानं पात्रप्रक्षेप्रत्येकं तत्प्रतिपादनम् ततो जलादीनां चतुष्कोणमंडलकरणं अत्र मंडले दिगुपक्रमनिय
मः प्रमाणाभावान्नास्ति ततो जले आहुतिद्वयहोमः तत्रान्नेव्यंजनयोगो न कर्त्तव्यः उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करि
ष्य इत्यत्र घृताक्ता :

श्रा·वि योजनमितिबहुनवीनग्रंथेषुलिखितं इदमन्नमिमा आपइदमाज्यमित्यन्नजलघृतेष्वंगुष्ठनियोजनानंतरमिदंहविरितिपुनरन्नेंगु
४ ष्ठनियोजननमिति प्राचीनसंप्रदायः तदनयोःपक्षयोःप्राचीनःसंप्रदायःप्रमाणिका तथाहिकल्पतरौ श्राद्धकांडेपैठीनइदंहवि
रित्येवसांगुष्ठमन्नविधिंब्राह्मणेभ्योदद्यात् अस्यायमर्थं अन्नविधिरन्नप्रकारःपायसादिःसब्राह्मणांगुष्ठनिवेशनपूर्वकमिदं
हविरित्यभिधायसंकल्पनीयइतिलिखितं अन्नान्नोत्सर्गवाक्येएततेन्नंसोपकरणंस्वधेतिक्रमःएवमर्घपिंडसूत्रदानेष्वपि
प्रथमंतेपदोच्चारणं ततोदेयद्रव्यनामोच्चारणंकर्तव्यम् कात्यायनादौतथैववाक्यश्रवणात् प्रेतश्राद्धेषुब्रह्मपुराणाद्यनुसारेण
णावास्य तत्रनायंनियमः ततःपवित्रजपानंतरमन्नविकरणम् तत्रमंत्रद्वयम् अनग्निदग्धायेजीवायेप्रदग्धाःकुलेममभूमौदत्तेन
तृप्यन्तुतृप्तायान्तुपरांगतिमित्येकः अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम भूमौदत्तेनतृप्यंतुतृप्तायान्तुपरांगतिमित्यपरः
तत्रयजुर्वेदिनांनियमतः प्रथममंत्रेयेवीन्नविकरणात्कात्यायनेनतस्यैवगृहीतत्वात् वेदभ्रन्यानांद्वितीयमंत्रः योरारोकृत्वा
त्यपोऽस्पृशेदितिततआचमनं ततोहरिस्मरणं ततोगायत्रीमधुवाताजपः सचसव्येन अपसव्येनप्रमाणाभावात श्राद्धोपक्रमेगा
यत्रींजपवत् नचपूर्ववद्गायत्रींजपित्वेतिकात्यायनसूत्रेपूर्ववदित्यतिदेशादपसव्यप्राप्तिरितिवाच्यंपूर्वमपसव्योपदेशाभा राम·
वात् तथाचतत्रपूर्ववदित्यनेनपूर्वोपदिष्टप्रणवव्याहृतिसाहित्यस्यातिदेशः भवशर्मप्रतिहस्तकमतेऽत्रगायत्रीमधुवाता ४

जपोनास्ति ततः पिंडस्थानेऽपसव्येन रेखाकरणम् उल्मुकभ्रामणम् छिन्नमूलकुशास्तरणम् सव्येन देवताभ्य इति जपः ततो
ऽपसव्येन पिंडस्थानेऽवनेजनदानं ततः पिंडोत्सर्गः तत्रापि तेपदस्य प्रथमं ततः पिंडः स्वधेतिवाक्योच्चारणम् ततोऽ
करपोञ्छनं ततः आचमनं तत्र त्रिराचमेत्यभिधानात् चुलुकत्रयात्मकस्याचमनपदार्थस्य त्रिरित्यनेनान्वयात् चुलुकन
वतयाऽऽचमनंमन्यते वस्तुतस्त्वाचमनस्वरूपस्य चुलुकत्रयादानमनुवादारूपत्वादिति भाति ततोऽत्र पितर इत्याद्यनुष्ठा
नं ततः प्रत्यवनेजनं ततो नीवीविस्रंसनं ततः आचमनं ततः सव्यहस्तेन सूत्रमादाय दक्षिणहस्तेन वामान्वारब्धेन पिण्डो
परि सूत्रधारणा नमो इति पठित्वा ॐ एतद्वः पितरो वास इति प्रत्येकमविकृतेन मंत्रेण ततस्तदुत्सर्गः ततस्तूष्णीं गंधा
दिदानम् ततोऽक्षय्योदकदानादि अत्रापाकश्राद्धेऽक्षय्योदकदानादीनि केचिन्निवर्त्तयेतिप्रतिवचनाभावात् त
त्र युक्तं एवं सति प्रथमगायत्रीजपादेरपि निवृत्तिरापद्येत ब्राह्मणानुज्ञानाभावात् तस्माद्ब्राह्मणाभावे ब्राह्मणकर्तृकाप्य
नुज्ञानप्रतिवचनादीनि निवर्त्ततां भोजनान्तस्वास्मत्संप्रत्तु यजमानकर्तृत्वे अन्नोत्सर्गादिविदिति ततः आशीः प्रार्थनं ततः दा
तारो भिवर्द्धतां वेदः संततिरेवचेत्यत्र वेदशब्दस्य प्रथमैकवचनान्तस्यास्मत्संप्रदायपाठः कात्यायनसूत्रे प्रथमैकवचनान्त
स्यैव परंपरा प्राप्तत्वात् अग्निपुराणादौ तथा दर्शनाच्च ततः ऊर्जं वहन्तीरिति जलधारादानं पिंडोत्थापनम् उल्मुकस्याग्नि

न्नमूलानांचाग्नौप्रक्षेपः अर्घपात्रोत्तानीकरणं दक्षिणा देवताभ्यइतिजपः दीपनिर्वापनं हस्तपादप्रक्षालनम् आचमनं
विष्णुस्मरणम् श्राद्धीयद्रव्यस्यब्राह्मणेप्रतिपादनम् एकोद्दिष्टेतुएकस्योद्दिष्टतयाएकवचनांतप्रयोगेणवाक्यम् ॐअ
द्याऽमुकमासीयामुकपक्षीयामुकतिथौऽमुकगोत्रस्यपितुरऽमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्यइति
संकल्पवाक्यम् आश्विनकृष्णचतुर्दश्यांशस्त्रहतादीनामेकोद्दिष्टमशस्त्रादिहेतुकमरणायोगिनामश्विनकृष्णचतुर्दशी
श्राद्धाधिकरणंविधीयतेतथाचनिमित्तानांतदधिकरणोपस्थितिमात्रेणचरितार्थत्वात्संकल्पवाक्येनिमित्तोल्लेखोविफलइ
ति ॐअद्याऽश्विनकृष्णचतुर्दश्यममुकगोत्रस्यपितुरमुकशर्मणएकोद्दिष्टश्राद्धमहंकरिष्यइत्येवमेवसंकल्पोयुक्तः एवम
शौचादिनाऽन्तपाहेसांवत्सरिकैकोद्दिष्टश्राद्धाकरणेऽमावास्यांतेसतियातिथिःप्राप्यतेतस्यामेकोद्दिष्टंश्राद्धंकर्त्तव्यम् शुचीभूते
नदातन्यातिथिःप्रतिपद्यतेसातिथिस्तत्रकर्तव्यानत्वन्यावैकदाचनेतिवाक्येनशौचावस्थाप्राप्तप्रथमतिथिःश्राद्धाधिक
रणत्वेनबोध्यतेतत्रापिनिमित्तोल्लेखःऽप्रयोजकः प्राप्ततिथेरुल्लेखः प्रयोजकः तथाचाद्यामुकमासीयामुकपक्षीयामुकतिथा
वमुकगोत्रस्यपितुरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धमहंकरिष्यइत्येवंसंकल्पोन्याय्यः प्रेतश्राद्धरूपैकोद्दिष्टेविशेषः त
त्रप्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गतैकादशाहश्राद्धमहंकरिष्यइत्येवंसुगतिसोपानेवाक्यंतत्रयुक्तंमहाशौचांतद्वितीयदि

नेणकादशाहपदस्यानन्वयात् प्रथममासिकश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामित्यवनेजनंकुशोपरिद
द्यात् ततस्तिलघृतमधुयुतेनान्नेनपिंडंकृत्वाघृतमधुभ्यामभिधार्य्यदक्षिणहस्तेनमोदकादीनिवादाय ॐअद्यामुकगोत्रपि
तरमुकप्रेतप्रथममासिकश्राद्धेएषपिंडस्तेमयादीयतेतवोपतिष्ठतामितिवामान्वारब्धदक्षिणहस्तेनावनेजनस्थानेपिंडंदद्या
त् ततोदर्भमूलेकरंप्रोञ्छ्यसव्यंकृत्वाचम्यहरिंस्मृत्वाअपसव्यंकृत्वादक्षिणाभिमुखः ॐअत्रपितर्मादयस्वयथाभागमावृ
षायस्वेतिपठेत् ततउत्तराभिमुखीभूयश्वासंनियम्यपितरंभास्वरमूर्तिंध्यायन्मुखंपर्यावर्तयन् अमीमदंतपितायथाभाग
मावृषायिषेतिपठेत् ततोऽवनेजनपात्रंदत्तावशिष्टजलयुतंवामहस्तेकृत्वा दक्षिणहस्तेमोदकादीन्यादाय ॐअद्यामुक
गोत्रपितरमुकप्रेतप्रथममासिकश्राद्धपिण्डेऽत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिप्रत्यवनेजनंपिण्डोपरिद
द्यात् ततोनीवींविस्रस्यसव्यंकृत्वाचम्यअपसव्यंकृत्वावामेनपाणिनाधृतंसूत्रंदक्षिणेनादाय उभाभ्यांपिण्डोपरिएतत्तेपित
र्वासइतिसूत्रंधृत्वामोदकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्धपिण्डएतद्वासस्तेमयादीयतेतवोप
तिष्ठतामितिसूत्रंसमुत्सृजेत् ततस्सूक्ष्मीगंधपुष्पादिकंदद्यात् ततःपिंडशेषान्नंपिण्डसमीपेविकिरेत् ॐशिवाआपःसंत्वि
तिजलं ॐसौमनस्यमस्त्वितिपुष्पं अक्षतंचारिष्टमस्त्वितितंडुलानन्नपात्रोपरिक्षिपेत् मोदकादीन्यादाय ॐअद्यामुकगोत्र

भा॰वि॰ स्यपितुरमुकप्रेतस्यप्रथममासिकश्राद्धदैतैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदकं दद्यात् ततः सव्यं कृत्वा ओं अघोरः पिता
६ स्त्विति दक्षिणां दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् ततः पूर्वाभिमुखीभूय ओं गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धन्तां वे
दः संततिरेव चेत्यादिनाशीः प्रार्थनं कुर्यात् ततोऽपसव्येन पिण्डोपरि सपवित्रान् कुशान् धृत्वा पुटकादिस्थजलेन ओं ऊर्ज्जं व
हन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्प्पयत मे पितरमिति कुशोपरि दक्षिणाग्रां जलधारां दद्यात् ततः पिण्डमाघ्रायोत्थाप
येत् पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् अर्घपात्रमुत्थाप्य मोदकादीन्यादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृतैतत
प्रथममासिकश्राद्धप्रतिष्ठार्थमिदं रजितं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणां दद्यात् ततः
सव्यं कृत्वा ओं देवताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पाणिना दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्येनाचमनं च कुर्यात् ओं प्रमा
दादिति पठित्वा विष्णुं स्मरेत् श्राद्धोपवस्तु निम्नब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् प्रायेणापात्रिकमेव मासिकश्राद्धकर्त्तारस्य प
श्राद्धप्रयोगो लिखितः त्रिपक्षश्राद्धमपि कर्त्तव्यमिति तच्च मासिकवत् एवमेव द्वितीयमासिकं तृतीयमासिकं चतुर्थमासिकं पञ्चममासि
कोनषाण्मासिकषाण्मासिकसप्तममासिकाष्टममासिकनवममासिकदशममासिकैकादशमासिकोनवार्षिकद्वादशमासिकश्राद्धे एम॰
षु तत्तत्पदप्रक्षेपेण प्रयोगरूह्यः अधिमासि यानेऽप्येकादशमासिकानन्तरं द्वादशमासिकं ततऊनवार्षिकं ततस्त्रयोदशमासिकं श्राद्ध ६

मितिक्रमः सपात्रकमासिकश्राद्धकरणे ब्राह्मणनिमंत्रणस्वागतप्रश्नपाद्यार्घदानाचमनीयदानब्राह्मणोपवेशनप्रतिवचननमोवाचन
अन्नास्मय्योदकदानवाक्ये श्राद्धविशेषणत्वेनोपात्तानां षण्णां तानां पदानां पदानादानोद्देश्यभूताभिधायकानां च षण्णां तानां पदानां प्र
योगे यौर्वापर्ये नियमो दृश्यते तत्रोभयत्राप्यन्वयप्रतीतेरेव कल्प्यत्वात् ततो न विशेषः एवं दक्षिणादानवाक्येपि आभ्युदयिकसंकल्प
वाक्येपि न विवादः नांदीमुखे विवाहे च प्रपितामहपूर्वकं वाक्यमुच्चारयेत्प्राज्ञो अन्यत्र पितृपूर्वकमिति पद्यं प्यस्ति प्रपितामहानुपू
र्वीवाक्यकरणे प्रमाणं तथाप्युपदेशानुरोधात् पितृपूर्वकमेव वाक्यं क्रियते तत्रोपदेश एव बहुप्रामाणिकानुमतः शरणं वस्तुतः प्रपि
तामहपूर्वकं वाक्यं युक्तं अत्र पित्राद्यर्घपात्रेषु यवप्रक्षेपे विवादः तत्र तिलप्रक्षेपमंत्रातिदेशेन यवादिपदप्रक्षेपेन पाठ इत्यभिमा
नो बीजं वस्तुतो ऽतिदेशेन प्रमाणं हलायुधनिबंधे मुख्यत एवमेवास्य मंत्रस्योपदेशादिति तत्र यवोसि सोमदेवत्यो गोसवो देवनि
र्मितः प्रत्नमद्भिः पृक्तः पुष्ट्या नांदीमुखान् लोकान् प्रीणाहि नः स्वाहेत्यस्मत्संप्रदाये पाठः स च हलायुधनिबंधे तथैव मंत्रस्य लेखना
दुपदेशस्य परंपराप्राप्तत्वेन स्थैर्य्याच्च तथैव युक्तः प्राचीनपितृभक्तिश्राद्धकल्पादिग्रंथेषु तथैव लेखनाच्च केषुचिद्ग्रंथेषु यवग्रहणार्थपि
त्वा नांदीमुखान् पितॄन् लोकान् प्रीणाहि नः स्वाहेति पितॄनिति पदमधिकं दृष्टमस्ति तदधिकमेवेति अत्र भूस्वाम्यन्नदानेपि देव वि
धिं कुर्वंति तन्न युक्तं तस्याभ्युदयिकबहिर्भूतत्वेन दैवविधौ प्रमाणाभावात् तथा च पित्र्यविधिनैव युक्तं इति अत्र नांदीमुखाः पितरः

श्रा॰ वि॰ प्रीयंतामित्यस्यस्थानेइतिकासापनसूत्रतत्रान्यत्रकथितषष्ठ्यंतद्वारणार्थमस्यपदवारणार्थंप्रथमांतपदेनैवनिर्देशः पितरःप्री
७ यंतामितिचोक्तं एतदेववाक्यंमंत्रप्रयोक्तव्यमितिकेचित् अस्मत्संप्रदायेतुश्राद्धांतरवत्प्रत्येकोद्देश्यतायांबाधकाभावात्वाक्य
स्यषष्ठ्यंतपदाद्यस्यपदप्रयोगनिवारणार्थत्वेनचरितार्थत्वात् अमुकगोत्रामाताऽमुकदेवीनांदीमुखीदत्तैतदन्नपानादिभिः प्रीय
तामितिवाक्यंक्रियते अत्रवैदिकमंत्रेष्वपिनांदीमुखपदंयोजयित्वापठंति अत्रनांदीमुखाः पितरोमादयध्वम् नमोवोनांदीमु
खाः पितरोरसायेत्यादिक्रमेण तत्रयुक्तम् मंत्रेपितद्योजनस्याप्रामाणिकत्वात् लौकिकवाक्येष्वेवनांदीमुखान्पितॄनहमाह्व
यिष्येइत्यादिनाप्रकारेणप्रतिपदंसूत्रेनांदीमुखपदयोजनात् नित्यश्राद्धेपिगोत्रसंबंधिपदानामुच्चारणपूर्वकमेववाक्यंपि
तृभक्तावपितथैवलिखितं अत्रकेचिद्दक्षिणादानंनकुर्वंति तत्रयुक्तम् हंतयज्ञमदक्षिणमितिवाक्येनदक्षिणतयाऽवश्य
कर्त्तव्यत्वेनबोधनात् यज्ञपदेनतत्रश्राद्धस्याभिधानात्प्रकरणात् नचनित्यंश्राद्धमदैवंस्याद्दक्षिणापिंडवर्जितमितिवाक्ये
नविशेषदक्षिणानिषेधः अकरणेऽनिष्टश्रवणस्यान्यथास्थापयितुमशक्यत्वात् दक्षिणापिंडवर्जितमितिवाक्येऽन्वयस्या
न्यथाप्युपपत्तेः सामान्यतःप्राप्तदक्षिणाविधिबाधकत्वाभावात् तथाहिश्राद्धपल्लवेव्याख्यातम् नित्यंश्राद्धमदैवंस्यादर्घ्यपिंडवि एम॰
वर्जितंचदक्षिणादयेसाक्षिप्यंतेतेनतत्रनित्यश्राद्धेदक्षिणादेयेत्यर्थः इतिएवंस्कंदपुराणादिवाक्यपीदृशमन्यथायोजयितुमुक्तं ७

दक्षिणाबोधकवाक्यमनन्यथासिद्धमिति अतएव पितृभक्तावपात्रकनित्यश्राद्धप्रयोगलेखनेपि ततो यथाशक्ति दक्षिणां दद्यादिति लिखि
त्वद्दक्षिणादानं लिखितं नित्यं श्राद्धमदैवं स्यादर्घ्यपिंडविवर्जितमिति वाक्यं लिखितं तेन दक्षिणानिषेधशंकापि नावतारिता नित्य
श्राद्धाभिधायकं वाक्यमवतीर्य तत्रार्घ्यपिंडावाहनविश्वेदेवश्राद्धानि निषिद्धानि पूर्वेद्युर्दिननियमश्राद्धदिननियमाग्नौकरणश्रा
द्धोत्तरकर्मज्ञातिभोजनान्याचारान्निवर्तंते इति च निषिद्धपरिगणने दक्षिणा न गणिता पितृभक्तौ स्मृतिसारादावपि दक्षिणादानं कर्त
व्यमिति लिखितं अतो मीमांसकानामप्यपात्रकेपि नित्यश्राद्धे दक्षिणादानसंप्रतिपत्त्या निर्विकल्पकं दक्षिणादानं तीर्थश्राद्धे तु
विशेषः तथा आमान्नेनैव कर्तव्यमर्घ्यावाहनवर्जितमिति तथा च देवीपुराणे तीर्थेषु ब्राह्मणान्नैव परीक्षेत कदाचन अन्नार्थि
नमनुप्राप्तं भोज्यं तं मनुरब्रवीत् सक्तुभिः पिंडदानं च संयावैः पायसेन वा कर्तव्यमृषिभिर्दिष्टं पिण्याकेन गुडेन वा देयं तु तिलपि
ण्याकं शक्तिमद्भिर्नरैः सदा श्राद्धं तु तत्र कर्तव्यमर्घ्यावाहनवर्जितं श्वध्वांक्षगृध्रकाकानां नैव दृष्टिहतं च यत् श्राद्धं तत्तैर्थिकं ज्ञेयं पि
तॄणां तृप्तिकारकं अकालेप्यथवा काले तीर्थे श्राद्धं तथा नरैः प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणं पिंडदानं ततः शस्तं पितॄणां चाति
वल्लभं विलंबो नातिकर्तव्यो न च विघ्नं समाचरेत् संयावो घृतगोक्षीरगोधूमसाधितो भोज्यविशेषः अपि पिण्याकस्तिलखलिः पुनः
स्तिलपिण्याकपदं तिलमात्रविधायकमिति पितृभक्तिः अकाले विहितामावास्यादिव्यतिरिक्तेपि न तु निषिद्धेपि निषेधविधानानि

श्रा॰वि रोधात् नचनिषेधएतदतिरिक्तविषयः सामान्येबाधकाभावात् नचैतदेववाक्यंबाधकं एतस्यान्यथोपपादनादिति एवमेषपितृभ
८ क्तिः पिंडदानमुखेनप्रधानश्राद्धविधानमेव तत्रतत्तद्व्यक्तंतेयं श्राद्धंतुतत्रकर्तव्यमितिस्वयमेवाभिधानात् पिंडदानंततःशास्त
मितितीर्थेकेवलपिंडदानमपिकर्तव्यमितिबोधितं प्राप्तैरेवसदाकार्यमित्यनेनविलंबोनास्तिकर्तव्यइत्यनेनचतीर्थप्राप्तेतथाक
र्तव्यंयथातीर्थप्राप्त्यनंतरंस्नानादिनिषिद्धकालांतरसंयोगेनभवतिकिंतुतीर्थप्राप्त्यानंतरंतीर्थश्राद्धक्रियानुगुणस्नानसंध्यात
र्पणदेवपूजानंतरमेव श्राद्धक्रियाक्रियत इतिबोध्यते तदनुगुणातिरिक्तस्वाध्यायाचरणेनविलंबसंभवात् अतोदिनांतरेतीर्थप्रवे
शेस्नानादौकृत्वादिनांतरेश्राद्धंक्रियतइत्युक्तेतदिदंतीर्थश्राद्धमामान्नेनैवकर्तव्यं आपद्यनग्नौतीर्थेचचंद्रसूर्यग्रहेतथा आमश्रा
द्धंद्विजैःकार्यंशूद्रेणतुसदैवहीतिवाक्येनद्विजानामपितीर्थेआमामान्नश्राद्धविधानात् अत्रापदीति आत्मनोदेशकालादी
नांचोपप्लवावस्थाकथितासेनस्वाशक्तौदेशकालोपप्लवेपाकक्रियया श्राद्धासंभावनायामामश्राद्धंकर्तव्यमित्यर्थः अनग्नाविति पा
कयोग्याग्निरहितइत्यर्थः नत्वानग्नौश्रौतस्मार्ताग्निरहितेइत्यर्थः अनग्निमतामपिब्राह्मणानांसांवत्सरिकादौसिद्धान्नश्राद्धा
चरणस्यसर्वप्रमाणिकसंमतत्वात् आमश्राद्धेपिंडादिकमप्यामान्नेनैवकर्तव्यम्यदाहजाबालिः आमश्राद्धंयदाऽनग्निःस रान॰
र्वत्रैवमनीषिणः येनाग्नौकरणंकुर्यात्पिण्डांस्तेनैवनिर्वपेदिति अत्राप्यनग्निः पाकयोग्याग्निरहितइत्यर्थः काम्यंश्राद्धमामान्नेन ८

नकर्तव्यम् तथाहलघुहारीतः श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् अमावास्यादिनियतं माससंवत्सरादृते इति अत्रनिय
तमावश्यकमित्यर्थः तेनावश्यके अमावास्यादिश्राद्धे ऽग्न्याद्यभावे आमान्नविधिः नकाम्ये आवश्यकेपिमासिकसांवत्सरिका
दावेकोद्दिष्टेनामान्नविधिः माससंवत्सरादृतेइतिवचनात् एकोद्दिष्टं तुकर्तव्यं पाकेनैवसदास्वयमिति सिद्धान्तस्यैववाक्यांतरे
णाभिनियमतोविधानात् पाकासंपत्तौचसएवाह अभावेपाकपात्राणांतदहः समुपोषणमिति शूद्रेणसर्वश्राद्धमामा
न्नेनैवकर्तव्यम् शूद्रेणतुसदैवहीतिवाक्यात् आमश्राद्धेमांसादिव्यंजनान्यमान्यैवदेयानीतिश्राद्धपल्लवः भुजबलभीमे अ
पत्नीकः प्रवासीचयस्यभार्यारजस्वला आमश्राद्धंद्विजैः कार्यंशूद्रेणतुसदैवहीति अथदंपतिपूजनविवेचनं तत्रसंपूज्य
द्विजदांपत्यंनानाभरणभूषणैः वृषोत्सर्गंचकुर्वीतदेयाचकपिलाशुभेतिवाक्यम् अत्रनानाभरणभूषणैरितिभूषणपदं
क्रियापरंनपुनरुक्तिः अत्रसंपूज्येतिक्त्वाश्रवणात् वृषोत्सर्गांगंदंपतिपूजनमित्याहुः तन्नविनिगमनाभावेनोभयस्यापिप्रधान
त्वात्समानकर्तृकताबोधनमात्रेणक्त्वाश्रुतेरित्युपपन्नेरिति दंपतिपूजनस्यप्रधानत्वात् वृषोत्सर्गाकरणेपिदंपतिपूजनं
युक्तम् अथवृषोत्सर्गविवेचनम् तत्रवृषस्तरुणोवत्सतर्यश्चत्रिहायिन्यः चरणानिमुखंपुच्छंयस्यश्वेतानिगोपतेः लाक्षारस
सवर्णश्चतंनीलइतिनिर्दिशेत् एवंविधवृषाभावेन्योवृषभोपोयस्योपादेयत्वमाह वर्णतस्ताम्रकपिलोब्राह्मणस्यप्रशस्यतेस्नि

वृ॰ नि॰ ९ गधस्तेन वर्णेन क्षत्रियस्य प्रशस्यते कांचनाभेन वैश्यस्य कृष्णेनाप्यंत्यजन्मनः अत्र वृषोत्सर्गस्य वैदिक वहुमंत्रसाधनं तयावेदो
च्चारणानधिकृतस्य शूद्रस्य वृषोत्सर्गानधिकारप्राप्तौ कृष्णेनाप्यंत्यजन्मन इति शूद्रं प्रति वृषविशेषोपदेशेन वेदोच्चारणेऽधि
कारवोधनात् वृषोत्सर्गाधिकारो वोध्यते वेदोच्चारणेन विना तत्करणाक वृषोत्सर्गानधिकारे वृषविशेषकथनानर्थक्यापत्तेः
तस्मात् वृषविशेषोपदेशान्यथानुपपत्त्या शूद्रस्यापि वृषोत्सर्गेऽधिकारः कथ्यते तत्रापि एतत्पैवोत्सृजेरन्निति वृषोत्सर्गे
वैदिकवाक्यकरणात्व नियमविधानात्तेन विनोत्सर्गस्यानुपपत्तेरन्यथानुपपत्त्यापि शूद्रस्य वृषोत्सर्गवाक्य एव वेदपा॰
ठो नान्यत्रेति सर्वप्रामाणिकसिद्धम् शूद्रतुल्यन्यायतया मंत्ररहितायाः स्त्रिया अपि वृषोत्सर्गेऽधिकार इति केचित् तन्न
शूद्रवत्स्त्रिया अप्यधिकारवोधने प्रमाणाभावात् नहि तस्या अधिकारवोधनं विना कस्यचिद्वाक्यस्यानुपपत्तिः सामा
न्यविधेर्विशेषवचनेनैव वाधः वाधकस्य चानुपपत्तिमूलकत्वात् यावत्सवाधितेनुपपत्तिप्रशमो न भवति तावदेव वाध्ये
ते न चात्र सामान्यविधिप्रवृत्तौ काचिदनुपपत्तिरिति न तस्या अधिकारः एवमनुपनीतस्य त्रैवर्णिकस्य वेदशून्यतया वृ
षोत्सर्गेनाधिकारः वृषोत्सर्गकालश्च अशौचांत द्वितीयदिने कार्त्तिकी चैत्री रेवतीषु ताश्विनपूर्णिमा च तत्र कार्तिक्यां वृ राम॰
षोत्सर्गात्पूर्वम् यूपदानमधिकम् अशौचांतद्वितीयदिने वृषोत्सर्गेऽत्राभ्युदयिकाभावः सपिण्डनानन्तरमाभ्युदयिकेऽधि ९

कारान्त अत्राशनायस्वाहेत्यकारान्ताशन शब्दस्य चतुर्थ्यन्तस्य सुगतिसोपाने लेखनम् अशनायस्वाहेत्याकारान्ताशनिश
ब्दस्य चतुर्थ्यन्तस्य पाठः प्रमाणसिद्धः तथाहि अथर्वषोत्सर्गो गोपथेनाम्नात इति पारस्करसूत्रे पूर्वोपदिष्टस्य गोपथस्य धर्मस्या
तिदेशात् अग्निरुद्रशर्वपशुपत्युग्राशनिभवमहादेवेशानानां देवतानां पायसाहुतावुपस्थितिः तत्राशनिशब्द इकारान्त एवो
पदिष्टः तत्रापि यजुर्वेदीयमाध्यंदिनीशाखाप्रमाणं तत्र हि ऊनचत्वारिंशेऽध्याये अग्निं हृदयेनाशनिं हृदयाग्रेण प
शुपतिं कृत्स्नहृदयेन भवं यक्ना शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना वशिष्ठह
नुःशिङ्गीनि कोश्याभ्यामिति कण्डिकायामग्न्यादिदेवतानां कथितानां गोयज्ञे उपदेशात्तस्यां कण्डिकायामशनिशब्दस्ये
कारान्तस्योपादानम् एतत्कण्डिका शतपथे तस्मादशनिरसीति नामनिरुक्तिश्च पारस्करगृह्यसूत्रपद्धतिषु अशनयेस्वाहे
ति प्रयोगश्च प्रमाणाम् अशनशब्दस्य कुत्राप्युपदेशाभावनायामपि एवमशनिशब्दस्य प्रामाणिकत्वप्रमितौ वृषोत्स
र्गपद्धतिषु अशनये रेवदेवतात्वं नाशनशब्दस्येति स्थितम् पिष्टकाहुतिमन्त्रेपि पाठद्वैतं तत्र हि द्विवचनार्थमर्थः पदानि च वि
विच्यन्ते तत्र पूषा गा अन्वेतु न इत्यादिको मन्त्रः तत्र प्रथममादित्यविशेषवाचकः पूषणशब्दः प्रथमैकवचनान्त उपात्तः
ततो गोशब्दः पशुवाचको द्वितीयाबहुवचनान्त उपात्तः तत इण्गतावनुपूर्वो लोट् प्रथमपुरुषैकवचनान्तः ततः षष्ठी

आ॰वि॰ वहुवचनांतस्यास्मच्छब्दस्यनस्मादेशोरूपन्नइति पुनःपूषणशब्दस्यताहशस्यैवोपादानम् ततोरक्षपालनइत्यस्यलोट्प्र
१० थमपुरुषैकवचनांतस्यप्रयोगः ततोऽर्वन्शब्दस्याश्ववाचकस्यअर्वणस्त्रसावनञइतिसूत्रेणातृस्यादेशेकृतेऽर्वनइति
द्वितीयावहुवचनांतः ततःपूषण्शब्दस्यताहशस्यैवोपादानम् ततोवकारादेर्वाजशब्दस्यान्नवाचिनोद्वितीयैकवच
नांतस्यरूपम् तस्यचमोनुस्वारेकृतेयजश्चात्सकारेपरतोऽनुस्वारोच्चारणार्थं॰ततःषणुदानइत्यस्यानुवंधलोपेसत्व
नत्वयोःकृतयोस्तनादित्वादुप्रत्ययेगुणेचलोट्प्रथमपुरुषैकवचनांतस्यरूपंसनोत्विति ततोऽस्मच्छब्दस्यचतुर्थीवहुव
चनांतस्यरूपंनइति तदयमर्थः पूषादेवतानोऽस्माकंगाःपशून्अन्वेतुअनुगच्छतुप्रतिलयत्विति यावतपूषाऽर्वतोऽ
श्वान्रक्षतुपूषावाजमन्नंनोऽस्मभ्यंसनोतुददातुएवंपूषागाअन्वेतुनःपूषारक्षत्वर्वतःपूषावाजंसनोतुनःस्वाहे
तिव्यवस्थितोमंत्रः तत्रऋषभांकनेपिविवादःसचसुगतिसोपानेनैवनिर्णीतःदक्षिणपार्श्वेचक्रेणतत्सजातीयपार्श्वे
शूलेन चेतिलेखनात् दक्षिणपार्श्वस्यसजातीयन्दक्षिणपार्श्वमेवापश्चाद्भागरूपंतस्यवामपार्श्वइतिपश्चाद्भागीयवाम
पादोपरिभागएवायातिपुरोभागवामपार्श्वविवक्षायांतद्वामपार्श्वेइत्येवंब्रूयात् नतत्सजातीयेतिपदमुपादद्यादिति
हिरण्यवर्णइत्यादिष्वपिवर्णविवेचनापार्थःप्रदर्श्यतेहिरण्यवर्णइतिशुद्धोपलक्षणम् हिरण्यवर्णाःशुद्धवर्णाःशुव रामः
१०

श्रा॰वि॰ गोरदुसस्यषष्टीवहुवचनरूपमवत्सः तर्णकः प्रथमांतः सांहितिकाउकारः जरायुगर्भवेष्टनमस्यमेयुटस्तस्मान्नपुंसकप्रथमैकवच
११ ननंप्रति धुकदुहप्रपूरणेप्रति पूर्वेस्तस्मात्क्विपिप्रथमैकवचनभषभावे घत्वेचत्वैवरूपम् यो उनतिः पेपूषोभिनवंपनःत
स्यक्षांदसत्वादेकारस्यत्वंपीयूषः यद्वापीपूषमिवामृतमिवपूषस्तस्मात्प्रथमैकवचनेसोर्यत्वपत्वोपोआमिष्पाप्तीरःक
षसंयोगोऽयंटावन्तः घृतंसर्पिः तदितिछन्दान्नपुंसकप्रथमैकवचनम् तदनंतरमुशब्दोनिपातःसमुच्चयवाचीततइम
शब्दस्यषष्ठ्यंतस्यरूपम् तस्मिन्परतउशब्दस्ययणादेशः तद्वस्यरेतःरेतइतिसकारांतस्यतस्यरेतः शब्दस्यवीर्यवाच
कस्यनपुंसकेप्रथमैकवचनेरूपम् वद्मादीनियस्यरेतस्तेजःपरंपरमातत्कारणात्वादित्यर्थः तथाचमंत्रःपितावत्सानांपति
रघ्न्यानापथोपितामहतागर्गाणांवत्सोजरायुप्रतिधुकपीयूषआमीक्षाघृतंतद्वस्योरेतः वृषोत्सर्जनमंत्रोव्याख्यायते
एनंयुवानमित्यादिनाएतच्छब्देनद्वितीयैकवचनान्तेनोपस्थितंवृषंनिर्दिशतिएनमुपस्थितंवृषपतिंस्वामिनंवोयुष्माकं
कृतउपस्थितावत्सतरीर्लक्ष्मीकृतंनिर्दिशतिप्रइतिददानिस्यजानि तथाचायमर्थः हेवत्सतयोवोयुष्माकंकृतेएनंवृषदं
दानिस्यजानिददानीतिडुदाञ्दानेइत्यस्यलोडुत्तमपुरुषैकवचनेरूपंएतावतायुष्माकमयथेर्थेपंवृषोमयोत्सृष्टः स्वस्वत्वम गा॰ह॰
ध्वंसविषयपःकृतइत्युक्तंभवतितदुद्देश्येपत्वेमृयागेतांसांप्रयोजनमाहतेनवृषेणप्रियेणपत्यासहक्रीडतीःखेलंतस्यःचरथ १४

पृमनैननेत्रपदयोगेनेवसहशब्दाप्रयोगेपि सहार्थयोगेतृतीयाक्तोडेरितिच्छांदसोजसिपूर्वे सवर्णः वत्सतरीत्यागमप्याहमा
नद्यातेपूर्वोर्द्धस्थितमिहान्वापततस्यविभक्तिपरिमाणेनप्रथमांतस्यान्वान्वयः तेनायमर्थः हेवत्सतर्योयूयमितिनोऽस्माकंमाया
ऐोनेषधार्धः नास्मत्सत्वविषयाः युष्मास्वपि स्वलंमयानकृतमितियावत् एतावतावत्सतरीणांनमस्युत्सर्गः प्रतिपादितः उत्तरार्ध
फलमाहसास्यजनुषासुभागारायस्पोषेणसमिषामदेमेति अर्थादृद्धंरायोधनस्यपोषेणपुष्ट्यासमृद्ध्या संमदेमत्वद्दृष्टाभवे
मव्यवहितस्यापिसंशब्दस्यव्यवहिताश्चेतिछांदसस्युपसर्गसंज्ञामदेमेतिव्यत्ययेनश्यनोभावेशपिरूपंमदीहर्षेइत्यस्यलिङुत्त
मपुरुषबहुवचनेइषासंमदेमदमअन्नेनचसम्मदेमेत्यर्थः इष्यतोतीदुइच्छायामित्यस्यक्विपितृतीयैकवचनेरूपंमिषेति
धनसमृद्ध्याअन्नेनचसंमदेमेत्यर्थः किंभूतेनरायस्पोषेणधाचसास्यजनुषासैवसाअस्याः समन् शब्दस्यनकारांतस्यस्वार्थके
पिशिलोपेसाम्नमिति अकारस्यपकारादेशश्छांदसः जनुःशब्दोजन्मवाचीसकारांतः समनजनुषिजन्मानिभावीत्यर्थेतमधी
ष्टोभृतोभूतोभूतोभावीचेति आर्हीयष्टकन् साप्यधर्द्दपूर्वद्विगोर्लुक्संज्ञायामितिलुक्ततस्तृतीयैकवचनंसाम्नजनुषा
संमजन्मभाविनेत्यर्थः अतएववृहस्पतिः हाटकश्चिति गौरीशांसमजन्मानुगंफलमिति गौरीशब्देनात्रगौरभिधीयते
प्रकरणात्सुभगालोकस्यप्रियाः संमदेमेत्यन्वयः रायस्पोषेणेतिरैशब्दस्यषष्ठ्यंतस्यछांदसोविसर्जनीयस्यसकारः अन्य

श्रा·वि· चवृषोत्सर्गस्यमन्त्राः संप्रत्यधीयमानमाध्यंदिनीयशाखीयः ततः स्तत्रशासंतिकः सशापः इतिनिविवेचिताः पितृहीनस्यवा
१२ लस्य नामादिकर्मापितृहीनवालकनिरूपितमात्रादिपित्रादिमातामहादीनामभ्युदयिकश्राद्धंकुर्यात् तथाहि स्वपितृ
भ्यः पितादद्यात्पुत्रसंस्कारकर्मणिपिण्डानोद्वाहनातेषांतस्याभावेतुतत्क्रमादितिवाक्यंप्रमाणं तस्यार्थः पुत्रसंस्का
रकर्मणिनामकरणादौपिताजनकः स्वपितृभ्यः स्वकीयपित्रादिभ्यः पिण्डान्दद्यात् श्राद्धं कुर्य्यात् पिण्डपदेनश्राद्धो
पलक्षणात् आउद्वाहनात् उद्वाहनं विवाहमभिव्याप्यसुतसंस्कारकर्मणि तेनविवाहपर्यंतंसततसंस्कारकर्मइतिपर्यव
स्पतितस्याभावेतस्यपितुरभावेतत्क्रमात्पितृरूपक्रमेणपिण्डान्दद्यादित्यर्थः तथाचयोनामादिकर्तापितृहीनस्यभव
त्तिसपितृहीनपित्राद्युपक्रमेणश्राद्धंकुर्यादित्यर्थः संपद्यते ततश्चपितृहीननिरूपितपित्रादिबोधनात् तन्निरूपितमा
त्रादिमातामहादयोपिलभ्यंतेतस्येतिपदेनपित्रुपस्थानात् तत्संबंधशब्दत्वेनपुत्रस्योपस्थितौतेवकर्तव्यसंस्कारेणपित्रा
दिनिरूपणंनतुमाणवकपित्रा अतएकत्रतेननिरूपणान्मात्रादिपदकेमातामहादिपदकेचपितृहीननपुत्रेणैवनिरूप श्रा·वि·
णंतस्योपस्थितत्वात् निरूपकांतराकांक्षानिवृत्तेरूपस्थापकाभावाच्चेतितथाच तत्रमाणवकमातृपितामहीप्रपितामहीनां १२
नांदीमुखीनांमाणवकपितृपितामहप्र[illegible]महानांनांदीमुखानांमाणवकमातामहप्रमातामहवृद्धप्रमातामहानांनां

दीमुखानांमाणवकनामकरणनिमित्तकमाभ्यु[illegible]श्राद्धमहंकरिष्येइतिनामगोत्राद्युच्चारणपूर्वकवाक्यकर्त्तव्यंभवति ए
षचार्थः श्रीदत्तोपाध्यायसंमतः तथाहि पितृभक्तिश्राद्धकल्पग्रंथेतै लिखितम् अपुत्रस्यसपिण्डनानंतरंकुत्रश्राद्धप्राप्ति
रित्युक्तातदीपकन्याविवाहे आभ्युदयिकश्राद्धेतत्प्राप्नोतीतितथाचकन्ययैवतत्रपित्रादिरूपणंनतुकन्यापित्रापित्रा
दिनिरूपणमितिस्फुटपत्रतुपितुरभावोनास्तिस्तनारिनातस्याकर्त्तृत्वेतत्प्रतिनिधित्वेनतत्पुत्रनामादिकर्त्तायोभवतिस
माणवकपितुर्मात्रादिपित्रादिमानामहानांश्राद्धंकुर्यात् नस्याभावेतुतत्क्रमादितिवाक्यस्यतत्रानुपस्थितेः तथाच माणव
कपितुर्मातृपितामहीप्रपितामहीनानान्दीमुखानामाणवकपितुःपितृपितामहानाप्रपितामहानांनान्दीमुखानांमाणव
कपितुर्मातामहप्रमातामहवृद्धप्रमातामहानांनांदीमुखानामाणवकनामकरणनिमित्तकमाभ्युदयिकश्राद्धमहंकरिष्ये
इतिनामगोत्राद्युच्चारणपूर्वकंवाक्यंकर्तव्यम् एवंचपितुरभावेसर्वत्रमाणवकेनैवनिरूपणम् माणवकपितरिजीवति
[illegible]णवकपितृनिरुपिताएवमात्रादिपित्रादिमातामहादय इति निस्तरंगम् अशौचांतद्वितीयदिनेप्रथमंप्रेतत्वविमुक्ति
[illegible]श्रा[illegible]दियथाकालंषोडशश्राद्धमहंकरिष्येइतिप्रथमः संकल्पः ततः प्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गतायश्राद्धम
[illegible]इतिद्वितीयः संकल्पः पत्रतुएकादशमासाभ्यंतरेऽधिमासपातस्तत्रप्रेतत्वविमुक्तिकामआद्यादियथाकालंसप्त

श्रा॰ वि दशश्राद्धान्यहं करिष्ये इति प्रथमः संकल्पः अत्रच संवत्सराभ्यंतरे यद्यधिमासपातो भवति तदा मासिकार्थे दिनमेकं वर्द्धयेदिति

१३ विष्णुवाक्यं प्रमाणं सप्तदशश्राद्धकरणे तथाहि मासिकश्राद्धाधिकरणत्वेनाधिकदिनमेकं तद्वाक्यं बोधः पतितेनाधिकं

सप्तदशश्राद्धं बोधपतिते नैकादशाहानंतरं यत्र द्वादशभिर्दिनैर्द्वादशमासिकानि कृत्वा त्रयोदशेऽह्नि सपिण्डनं कुर्यादिति विधि

तत्रैवाधिमाससंभवे एकदिनश्राद्धवृद्ध्या त्रयोदशभिर्दिनैस्त्रयोदशमासिकानि कृत्वा चतुर्दशेऽह्नि सपिण्डनं कुर्यादिति पर्यव।

सितार्थो भवति एवंच एकादशमासाभ्यंतरेऽधिमासपाते सप्तदशश्राद्धानि कर्तव्यानीत्यायाति तथाच मुख्यपक्षे वर्षसपिण्ड

नेमासक्रमेणैव त्रयोदशसु मासेषु त्रयोदशमासिकानि मरणतिथिसजातीयतिथौ कर्तव्यानीति एकाहोनषाण्मासिके ऊन

मासिकम् एकाहोनवर्षे ऊनवार्षिकं श्राद्धं कर्तव्यम् द्वादशाहदिने सपिण्डने प्रथममासिक द्वितीयमासिक तृतीयमासिक

चतुर्थमासिक पञ्चममासिक सप्तममासिकाऽष्टममासिक नवममासिक दशममासिकै काादशमासिक द्वादशमासिकोन

वार्षिक त्रयोदशमासिकानि अनुक्रमेणैकस्मिन्दिने कर्तव्यानि त्रिपक्षे सपिण्डने मासे प्रथममासिकं कृत्वा त्रिपक्षपूरण।

पूर्वदिने द्वितीयमासिकादि त्रयोदशमासिकपर्यंतानि द्वादशमासिकानि कर्तव्यानि त्रिपक्षपूरकमरणतिथौ सजातीयतिथौ राम

बा सपिण्डनदिने एवं सर्वाणि कर्तव्यानि षष्ठमासे सपिण्डनपक्षे पंचसुमासेषु पंचमासिकानि मरणतिथिसजातीयतिथौक १३

त्वाषाण्मासिकपूरणपूर्वदिने ऊनषाण्मासिकादीनि दशमासिकानि कर्त्तव्यानि षष्ठमासपूरकमरणतिथिसजातीयतिथौ सपिण्ड
नदिने एव वा ऊनषाण्मासिकादीनि कर्त्तव्यानि नवममासे सपिण्डनेऽष्टसु मासेषु षष्ठमासिकानि कर्त्तव्यानि एकाहेन षाण्मासि
के ऊनषाण्मासिकं कर्त्तव्यं नवममासपूरणपूर्वदिने नवममासिकादीनि एवाष्टसु पद्व षण्मासिकानि कर्त्तव्यानि नवममास
पूरणमरणतिथिसजातीयतिथौ सपिण्डनदिने एव वा कर्त्तव्यानि एकादशाहानन्तरं दिने कैकमासिकश्राद्धकरणे त्रयो
दशसु दिनेषु त्रयोदशमासिकानि कर्त्तव्यानि षष्ठे दिने मासिकद्वयं ऊनषाण्मासिकं षष्ठमासिकं च कर्त्तव्यम् त्रयोदशे दि
ने मासिकद्वयमूनवार्षिकं त्रयोदशमासिकं च कर्त्तव्यम् चतुर्दशे दिने सपिण्डनम् शूद्रेण तु त्रयोदशदिने एव सपिण्डनं
कर्त्तव्यमिति विशेषः अथ च त्रिपक्षादौ सपिंडनपक्षे प्रथममासादौ यदि त्वाशौचमापतति तदाशौचापगमे मासिकं
कृत्वाऽग्रिममासादौ प्रकृतक्रमेण मासिकं कर्त्तव्यम् सूतंपघापतति तदीक्षतान्ते मासिकं कृत्वाऽग्रे प्रकृतक्रमेण मासि
कं कर्त्तव्यम् यदि राष्ट्राद्युपद्रवरूपविघ्नेन दिनविस्मरणादिना वास्यापाहज्ञानेन श्राद्धं तत्कृतम् तदा एकादश्यां पतितता
मासिकानि कृत्वाऽग्रे प्रकृतक्रमेण मासिकं कर्त्तव्यं मासिकस्यैकोद्दिष्टरूपत्वात् एकोद्दिष्टस्य च कर्त्तव्यतायां श्राद्धवि
घ्नसमुत्पन्नेऽस्य पाहे विहिते तथा एकादश्यां प्रकुर्वीत तत्कृष्णपक्षे विशेषत इति वाक्यं प्रमाणम् सूतकाशौचयोरपि तदनन्तरका

श्रा॰ वि॰ त्वकर्तव्यं बाधितमेकोद्दिष्टस्येति अग्रिममासिके पतितं मासिकं क्रियते इति जघन्यः पक्षः प्रमाणाभावात् केचित्तु प्रथममासिमा
२५ सिकश्राद्धाकरणे अपर्याप्तात्तु प्रतीतिवाक्येन मासद्वयांते मासिकद्वयं कर्तव्यं एवं प्रत्यृतु मासिकद्वयं कर्तव्यमित्येषमेव क्रमः
तत्र च वाक्यबलेन तृतीयऋतौ पूर्वदिने ऊनषाण्मासिकम् ऋतु पूर्त्तौ पंचममासिके कर्त्तव्ये एवं च षष्ठऋतौ पूर्वदिने ऊनवार्षि
कं षष्ठऋतौ एकादशमासिकद्वादशमासिके कर्तव्ये यत्तु द्वादशाह एव दिने सपिण्डनकर्त्तव्यता यां प्रथममासिकादौ कृते ऽशौ वा
दिनासपिण्डनबाधस्तत्राकृतमासिकादेरकिञ्चित्करत्वम् तद्दिनसपिण्डनक्रियोपाधिकतया सपिण्डनासंभवे कृतमासि
कानामयथाकालकृतत्वेनाकृतकल्पत्वात् एकाहादि कर्तव्य सपिण्डनक्रियाकल्पे तु प्रथमगृहीतकल्पस्यानिर्वाहे कल्पांतरं
नाश्रीयत इति मतमनादेयं प्रेतत्वविमुक्तिहेतुत्वेन सपिण्डनक्रियाया आवश्यककर्तव्यत्वेन बाधकन्यायांतराणवकाशादिति
अथावश्यकश्राद्धकालाः तत्र विष्णुः अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रोष्ठपद्यूर्द्धकृष्णत्रयोदशी व्रीहियवपा
कौ चेति एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते अमावास्याद्यस्तनेन केवलाया
अमावास्याया विधानादमावास्यामात्रं निरग्निनाभावस्यक श्राद्धकाल इति प्रतिपादितम् तेनाग्निमतामिंदुक्षयो निमितां राम
तरम् तत्र तेषामिंदुक्षयापेक्षया तद्व्यवस्थापकानि बहूनि वाक्यानि तत्रोपयुक्तानि अमावास्यायां तु यस्मिन्दिने ऽपराह्णे ऽमा १४

वास्यालाभस्तस्मिन्नेव दिने श्राद्धं उभयदिने त्वपरान्हेऽमावस्यालाभे प्रथमदिने श्राद्धं प्रथमप्राप्तत्यागस्यान्याय्यत्वात् उभयदि
नेत्वपरान्हेऽमावास्याया अलाभे उत्तरदिने मध्यान्हेपि श्राद्धं कर्तव्यमुख्यकालालाभात् अविशेषान्मलमासामावास्याया
मप्यावश्यकं श्राद्धं कर्तव्यम् तिस्रोऽष्टका इति पौषमाघफाल्गुनकृष्णाष्टम्यः तासु चापूपमांसशाकानि श्राद्धद्रव्याणि तत्रा
पूपस्यान्नरूपतया तस्यैव तृप्तिक्षमतया मुख्यत्वं मांसशाकयोस्तु उपकरणत्वेनान्वयो यथासंख्यमष्टकाद्वये मुख्यद्रव्यमो
दनादिकमेव अत्र पारस्करगृह्यम् ऊर्द्ध्वमाग्रहायण्यास्तिस्रोऽष्टका ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्याप्यपूपमांसशाकैर्य
थासंख्यम् अत्र तिसृषु यथासंख्यापित्र्यापीत्यनेन चतुर्थी अष्टका विधीयते तत्रापि शाकस्तूपकरणं वर्षासु मध्ये शाकैश्च
तुर्थ्यामेव सर्वदा वर्षासु मध्येऽपरपक्षस्य भाद्रकृष्णपक्षत्वात् दशम्या वर्षामध्यत्वं शाकैरिति तस्यां ब्रह्मपुराणेन शाको
पकरणविधानात् एवं च स्वातन्त्र्येणाप्याश्विनकृष्णाष्टम्यामष्टकात्वेन श्राद्धविधानात्तस्मिन्पक्षे दिनान्तरे श्राद्धासंभावेप्य
ष्टम्याः स्वातन्त्र्येण निमित्तत्वमिति प्रतिपादितम् अत एव चतसृष्वप्यपूपमांसशाकासंपत्तौ द्रव्यान्तरेणापि श्राद्धकरणमुक्तं
श्राद्धस्य नित्यत्वादिति प्रतिभाति अन्वष्टकास्तु साग्नीनामावश्यकश्राद्धकालः अन्वष्टकाश्राद्धविधाने साग्निकर्तृकत्वलिंग
दर्शनादिति माघी मघायुक्ता माघे पूर्णिमा तत्रैव माघीशब्दस्य व्युत्पत्तिसिद्धत्वात् अत्रान्वष्टकास्तिस्रः साग्नीनामावश्यकश्राद्ध

श्रा॰वि॰ कालः अपरः साग्निनिरग्निसाधारण आवश्यक श्राद्धकालः प्रौष्ठपद्यूर्द्धं कृष्णत्रयोदशी अपरपक्षीया एतावता ऽऽश्विनकृष्णपक्षे
१५ स्यैव नित्यकालत्वेन तत्र दिनांतरे ऽशौचादिना श्राद्धबाधेपि त्रयोदश्यामावश्यकं श्राद्धकरणमित्युक्तं भवति व्रीहियवपाको
चेति शारद्वसंते च व्रीहियवाभ्यामावश्यकं श्राद्धं तत्र च नवव्रीहियवयोरसंपत्तौ पुराणाभ्यां तत्र श्राद्धं कर्त्तव्यं तदभावे द्रव्यां
तरेणापि श्राद्धं कर्त्तमिति तथा च नवप्राशनकर्मप्रस्तावे गोभिलगृह्यभाष्ये गृहमेधी व्रीहियवाभ्यां शरद्वसंतयोर्यजेत् श्या
माकैर्वनी वर्षासु आपत्काले ऽन्येन पुराणेन वेति वचनात् अत्र वनी वानप्रस्थ इत्यर्थः यद्यप्यत्र यागे विधानं तथापि श्राद्धेप्यवि
कास्तायास्तुल्यतया तदसंपत्तौ पुराणव्रीहियवविधिरन्यद्रव्यविधिश्चापतितः अत एव वसिष्ठः श्रावण्याग्रहायण्योरष्टका
सु च पितृभ्यो दद्यात् श्रावण्याग्रहायण्यौ श्रावणपूर्णिमा मार्गशीर्षपूर्णिमे श्रवणमृगशिरोयुक्ते एतयोर्निरग्नीनामप्या
वश्यकं श्राद्धकरणं विशेषाश्रवणात् एतच्च श्राद्धकल्पे श्राद्धपंज्यां च सुव्यक्तम् अष्टकाः कथिता एव मनुः अश्वयुक्कृष्णप
क्षे तु श्राद्धं देयं दिने दिने त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा दिने दिने प्रतिदिनमित्यर्थः एवं चापरपक्षीयदिनत्वेन वि
धानात्तस्मिन्पक्षे दिनपुरस्कारेण श्राद्धस्य प्रतिदिनकर्त्तव्यता बोधितम् तथा चापरपक्षे सर्वेषु दिनेष्वपराह्नकाले श्राद्धक राम॰
र्त्तव्यं तत्र न तिथिविशेषजिज्ञासेति तिथिविशेषकथितं फलं तत्रापि संवत्सरस्यैव श्राद्धस्य वस्तुतस्तत्तत्तिथ्यवच्छिन्नकालकत्वात् १५

दिनपुरस्कारेणैवश्राद्धकरणे कन्यागते सवितरि यान्यहानि तु षोडश क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयमिति वाक्ये ऽन्हां
[illegible]त्वं संगच्छते तिथिवृद्ध्या परपक्षस्य षोडशदिनात्मकत्वसंभवात् एवं च त्रयोदश्याममावास्यायां चाग्निमदिने ऽपरान्हका
लालाभे ऽपि निषिद्धप्रातर्मुहूर्त्तद्वयातिरिक्तकाले कृततदुभयतिथ्यवच्छिन्नेकाले श्राद्धे नापिकर्धा श्राद्धं कर्त्तव्यं दिनत्वेन
श्राद्धकरणपुरस्कारात्सर्वस्मिन् दिने तत्पक्षनिमित्तकश्राद्धमायाति दिने दिने इत्यस्य तिथौ तिथौ इति व्याख्याने प्रथमे दि
नशब्दस्य मुख्यार्थत्यागः एकस्मिन्दिने श्राद्धयोग्यतिथिद्वयप्राप्तौ पार्वणद्वयप्रसंगः एकस्मिन्दिने ऽप्यस्यां तिथौ श्राद्धकृ
तं तस्यां तिथौ दिनांतरे श्राद्धकालव्याप्तौ श्राद्धानाचरणात् तन्निष्ठ्यवच्छेदेन श्राद्धस्य कृतत्वात् एतदुभयं च न सर्वप्रामाणि
कव्यवहारसिद्धमिति दिने दिने इति मुख्यशब्दार्थपरिग्रह एव युक्तः त्रिभागहीनं पक्षमिति तृतीयभागहीनपक्षस्य दि
धानात् तत्र पंचमीप्रभृति श्राद्धे विधानम् त्रिभागमिति तृतीयभागमारभ्य दशमीप्रभृतीत्यर्थः अर्द्धमेवेति पक्षार्द्धविधा
नमष्टमीप्रभृतीत्यर्थः अत्र च पक्षे कल्पचतुष्टये ऽपि चतुर्दशीत्यागः पार्वणश्राद्धकृत्स्नपक्षे दशम्यादौ वर्जयित्वा चतुर्दशी ॥
श्राद्धं प्रशस्तास्तिथयो यथैता न तथेतरा इति मनुना चतुर्दशीपार्वणश्राद्धस्य निषेधात् त्रयोदशीश्राद्धे ऽपि यद्यपि निंदा श्रूय
ते [illegible]दायाः काम्यश्राद्धविषयत्वात् अस्य पुकृत्स्नपक्षीयदिनत्वप्राप्तस्यावश्यकत्वं तस्यानिरस्तत्वादिति त्रयोदशीश्रा

श्रा॰वि॰ द्धं कर्त्तव्यमिति बहुप्रामाणिकव्यवस्थानेऽत्र त्रयोदशीश्राद्धं पुत्रवान्यः सुतापुवे इत्यादि निषेधवाक्यममौलिकमिति रत्नाकरः
१९ चतुर्दश्यां शस्त्रादिहतस्यैकोद्दिष्टविधिना श्राद्धम् अत्रशायोः न पानशस्त्राग्निविषोद्बन्धनिनां तथा चतुर्दश्यां श्राद्धं कर्त्तव्यं त
श्चर्थमिति निश्चय इत्यादि ब्रह्मपुराणादिवाक्येषु स्वेतरनिमित्तेन मृतानां चतुर्दश्यां श्राद्धं कर्त्तव्यमिति तात्पर्यमाचारानुरोधात् ते
न स्त्रिया अपि प्रसवेन मृतायाश्चतुर्दश्यामेकोद्दिष्टं वायुपुराणे युवानस्तु गृहे तु स्पमृतास्तेषां तु दापयेत् शस्त्रेण च हतापेवै तै
शंदघाच्चतुर्दशीम् गृह इत्युपलक्षणम् तेन पुत्रदशायां यत्र कुत्रापि मृतानां पित्रादीनां श्राद्धं चतुर्दश्यां कर्त्तव्यं शस्त्रहता
नां च श्राद्धं कर्त्तव्यमित्यर्थः पुत्रमरणे तु पुत्रदशामृतत्वमेव प्रयोजकं न तु रोगेतरनिमित्तमृतत्वं हेतुविशेषानभिधानात् पुत्रेतरणे रो
गेतरनिमित्तत्वं प्रयोजकम् अत एव पुत्रेतरस्यानुपसर्गहेतुकमरणे चतुर्दश्यां न श्राद्धं रोगनिमित्तमृतत्वात् एतच्च श्राद्ध
मेकोद्दिष्टविधिनाऽऽचारात् चतुर्दश्यां तु पच्छ्राद्धं सपिंडीकरणोक्तं तदेकोद्दिष्टविधिना कर्त्तव्यं शस्त्रघातिनामिति गौडव्या
ख्यदर्शनाच्च शस्त्रघात एषामस्तीति शस्त्रघातिनः शस्त्रादिहतास्तेषामित्यर्थः स्त्रीणामप्येतदेकोद्दिष्टं पुंस्त्वस्याविवक्षितत्वा
दिति अत्र च शस्त्रादिनिमित्तमृतानां पुत्रमृतानां च चतुर्दशीश्राद्धसमयो बोधित इति शस्त्रघातादिना मृतस्यैतद्दिने श्राद्ध ए
भागित्वबोधने तात्पर्यात् एकोद्दिष्टश्राद्धसंकल्पवाक्ये तन्निमित्तकमरणोल्लेखो न प्रयोजकः वस्तुतः सनामेव निमित्तानामे ११

तच्चतुर्दशीश्राद्धनिमित्तत्वात् तथा चाऽद्याऽऽश्विनकृष्णचतुर्दश्याममुकगोत्रस्य पितुरमुकशर्मण एकोद्दिष्टश्राद्धमहं करिष्ये
इत्येवं संकल्पः कर्तव्यः युवानस्तत्र षोडशवर्षवयस्कमारभ्य त्रिंशद्वर्षपर्यंता विवक्षिता इति रत्नाकरप्रभृति निबंधः अत्र प
क्षे प्रतिपदादितिथिषु फलानि च नानाविधानि नानास्मृतिषु कथितानि तेषु पुरुषमात्रकामनाविषयकफलानि निष्कृष्य लि
ख्यंते तत्र यथा प्रतिपदि धनलाभः लब्धाविनाशो फलम्॥ द्वितीयायां द्विपदाधिपत्यं तृतीयायां सर्वकामप्राप्तिः चतुर्थ्यां य
शःप्राप्तिः पंचम्यां महालक्ष्मीः षष्ठ्यां द्विजकर्तृकपूजनम् सप्तम्यां गणाधिपत्यम् अष्टम्यां संपूर्णर्द्धिः नवम्यां स्त्रीविष
यकैश्वर्यम् दशम्यां बहुगोजातीयलाभः एकादश्यां बहुब्रह्मवर्चस्विपुत्राः द्वादश्यां सुवर्णरजतम् त्रयोदश्यां जातिश्रेष्ठ
म् चतुर्दश्यां भूतिः अमावास्यायां प्रतिपदादितिथ्युक्त सर्वफलानि अत्र च नित्यत्वपुरस्कारेणापि सर्वे दिन क्रियमाणश्राद्धे
षु तत्तिथिप्राप्तौ तत्तत्फलप्राप्तिरपि भवतीति प्रतिभाति संध्यावंदने स्वेव संध्यावरादि देशाकरणोकथितफलयोगात्॥
गंगातीरादिकृतावश्यकश्राद्धवच्चेति अश्विनकृष्णपक्षे केवलायास्त्रयोदश्याः पार्वणश्राद्धं प्रति निमित्तत्वमुक्तं विष्णुना
प्रोष्ठपद्यूर्द्ध्वं कृष्णत्रयोदशीत्यनेन केवलायाम घायानिमित्तत्वमुक्तं देवीपुराणे तत्रापि महती पूजा कर्तव्या पितृदैवते ऋ
क्षे पिंडप्रदानं तज्ज्येष्ठपुत्री विवर्जयेदित्यनेन पितृदैवतऋक्षे मघायामित्यर्थः मघात्रयोदश्योर्मिलितयोरपि निमित्तत्वमु

श्रा॰ वि॰ कृंवहुभिः तत्र शंखः प्रौष्ठपद्यामतीतेयां मघायुक्तां त्रयोदशीम् प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च श्रीमहाभारते अपि
१७ नः स कुले जायात् यो नो दद्यात् त्रयोदशीम् मघायां सर्पिषा युक्तं पायसं दक्षिणायने मनुः यत्किंचिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीं
तदप्यक्षयमेव स्याद्वर्षासु च मघासु च वशिष्ठः पितामहश्चैव तथैव प्रपितामहः उपासते सुतं जाताः शकुंता इव पिप्पलम् मधुमांसैश्च शाकै
श्च पयसा पायसेन च एष नो दास्यति श्राद्धं वर्षासु च मघासु च ब्रह्मपुराणे आश्वयुज्यां तु कृष्णायां त्रयोदश्यां मघासु च प्रावृड्तौ यमः
प्रेतान् पितॄंश्चापि यमालयात् विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरं क्षुधार्त्ताः कीर्त्तयंतश्च दुष्कृतं तु स्वयं कृतम् पायसं पुत्रपौत्रे
भ्यः कांक्षंतो मधुसंयुतम् तस्मात्तांस्तत्र विधिना तर्पयेत् पायसेन च मध्वाज्यतिलमिश्रेण तथा शीतेन वांभसा ग्रासमात्रं परगृ
हाद्भक्तं यः प्राप्नुयान्नरः भिक्षामात्रेण यः प्राणान् संधारयति वा स्वयम् यो वा संवर्द्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् श्राद्धं तेना
पि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसंचितैः त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च न स्मात्परतरः कालः श्राद्धेष्वन्यत्र विद्यते यत्र साक्षाद्धि
पितरो गृह्णंत्यमृतमक्षयं आश्वयुज्यामिति त्रयोदश्यामित्यस्य विशेषणं तेनाश्विनकृष्णत्रयोदश्यामित्यर्थः प्रावृड्तौ वर्षा
तावित्यर्थः शुक्लादिमासरीत्या परपक्षस्य भाद्रांतर्गतत्वाद्वर्षं तु लभम् अत्र तद्द्रव्यविधानं श्राद्धस्यावश्यककर्त्तव्यत्वविधा श्रा॰
नम् फलप्रकर्षविधानं च मघात्रयोदश्योर्मिलितयोः मिलितयोर्मघात्रयोदश्योः सूर्यस्य हस्तनक्षत्रावस्थितौ तृतीयं निमि १८

तंतस्यगजच्छायेतिनामतथाचब्रह्मपुराणेयोगोमघात्रयोदश्योःकुंजरच्छायसंज्ञकः भवेन्मघायांसंस्थेचशशिन्यर्केकरेस्थि
तेतत्रचश्राद्धमावश्यकम् तत्रयाज्ञवल्क्यमप्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः श्राद्धंप्रतिरुचिश्चैवश्राद्धकालाः
प्रकीर्तिताव्यतीपातोज्योतिषप्रसिद्धः सूर्यचंद्रमसोः क्रांतिसाम्यसमयःपुण्यकालविशेषः अत्रचगतच्छायायाश्चन्द्रसू
र्यग्रहणस्यचावश्यकश्राद्धकालत्वं अत्रकेवलायांत्रयोदश्यामिलितयोर्मघात्रयोदश्योर्गजच्छायायांचसपुत्रस्यापुत्रस्यो
रप्यधिकारःपिंडवर्ज्यमेवश्राद्धेपुत्रिणआवश्यकश्राद्धानिषेधात् नेच्छत्रयोदशीश्राद्धंपुत्रवान्यःसुतायुषेइत्यादिनिषेध
वाक्यममौलिकमितिरत्नाकरलेखनात् पुत्रवतोपित्रयोदशीश्राद्धाधिकारःकेवलायांमघायांपुत्रवताश्राद्धंपिण्डरहितंकर्त
व्यमितिविशेषः गजच्छायायोगोयावत्कालमवतिष्ठतेतावत्कालपर्यंतंब्राह्मणेनभोजनंनकर्तव्यम् तथाब्रह्मपुराणेसू
तकेमृतकेचापिग्रस्तयोश्चंद्रसूर्ययोः छाया यांकुंजरस्याथभुक्त्वातुनरकंव्रजेत् भुक्त्वाप्रमादाद्विप्रस्तुसम्यक् चांद्रायणं
चरेत् प्राक्छायेकुंजरस्यचेतियाज्ञवल्क्यवाक्येश्राद्धंप्रतिमितांतरमेवोक्तम् पारस्करः श्रद्धान्वितःश्राद्धंकुर्यात् शाके
नापिनापरपक्षंप्रतिक्रामेत एतत्सर्वमपिश्राद्धस्याक्षयफलत्वमपि नस्मिन्पक्षेकल्पचतुष्टयेप्रथमपक्षाद्युपक्रमेणश्रा
द्धारम्भेकृतेतत्रविघ्नेजातेऽग्निमकल्पेनानुसरणीयइतिमतमनादेयम् नित्यत्वेकल्पांतरेवाधकन्यायानवतारादिति एतस्मि

भक्षे श्राद्धकरणाभावे कार्तिकामावास्यायामितोप्यावश्यकं श्राद्धं येयं दीपान्विता राजन् ख्याता पंचदशी भुवि तस्यां देयं नचे
द्दत्तं पितृणां तु महालय इति वाक्यात् महालये पितृणामुक्तवाप्रेः परपक्षे इत्यर्थः शातातपः सर्वस्वेनापि कर्तव्यं श्राद्धं
वै राहुदर्शने अकुर्वाणस्तु तच्छ्राद्धं पंके गौरिव सीदति राहुदर्शनं तं हि श्राद्धमात्र कारकमिति न वोदकेन वान्ने
च गृहमच्छादने तथा पितरः स्पृहयंत्यन्नमष्टकासु मघासु च तस्माद्दद्यात्सदायुक्तो विद्वत्सु ब्राह्मणेषु च नवोदक इति व
र्षोपक्रमे जलसंभवे इत्यर्थः सदा वाराद्दार्द्रानक्षत्रावस्थित सूर्यावच्छिन्न समय इत्यर्थः नवान्न इति शारदिवसं ते च इति प्रा
चः गृहमच्छादन इति गृहोपरि तृणेनाच्छादनमेतत्सर्वं श्राद्धनिमित्तं गृहप्रवेशस्त्वाभ्युदयिक श्राद्ध निमित्तं प्रवेशे
नववेश्मन इति वाक्येन विहितं तीर्थ श्राद्धेति निमित्तकं पूर्वं कथितं अत्र च नवान्नभक्षण निमित्तं च पार्वण श्राद्धस्य ज्यो
तिषे प्रतिपादितं तत्र च पितृदेवेभ्योऽदत्त्वा नवान्नभक्षणं निषिद्धमिति नवान्नभक्षण पूर्वकाले आवश्यकं श्राद्धं यद्यपि
नवानि नानाविधान्यन्नानि भवन्ति तथापि गृह्ये नवान्नप्राशन निमित्त कर्म वान्न कर्म कथने गृह्यभाष्ये च गृहमेधी व्रीहिय
वाभ्यां शरद्वसंतयोर्यजेत् श्यामाकैर्वनीवर्षास इति लिखितेन वाक्येन षष्टिकाय वश्यामाक रूपान्न संभव काल एव वि राम·
मितः तत्रे श्यामाकोत्पत्तिर्वानप्रस्थानां श्राद्धकालः गृहस्थानां पव व्रीहि प्राशनं परं श्राद्धकालः यद्यपि नवान्नप्राशन कर्मणि द् १८

श्वैर्विधानं तथाप्याकांक्षातुल्यत्वा श्राद्धेपि द्वयमेव निमित्तमिति तत्र षष्टिकव्रीहिभक्षणनिमित्तकं शारदि नवान्नभक्षण
मित्तकं वसंते हेमंते हैमंतिक नवान्नभक्षणनिमित्तम् ज्योतिषानुसारात् तथाहि ज्योतिष भोजराजः वृश्चिके पूर्वभागे तु नवा
न्नं शस्यते बुधै उत्तरे क्रियमाणं तु धनुष्ये वक्तं भवेत् धनुषि यत्कृतं श्राद्धं पितृणां नोपतिष्ठते पूर्वभागोऽत्र वृश्चिकत्रयोद
शांशक रूपक आचारात् धनुषि यत्कृतं श्राद्धं हैमनोषु निशासु च पितरस्तन्नगृह्णंति नवान्नामिष कांक्षिणः शुक्लेपक्षे
तवं धान्यं पक्वं ज्ञात्वा सु शोभनसुतिथौ सुमुहूर्ते च नवान्नफलभक्षणं त्रिजन्मसु त्रयोदश्यां नंदायां पितृभे पिवा श्राद्धं सु
कृदिनेनैव कार्यं सा ततिमिच्छता चैत्रे पौषे कृष्णपक्षे नवान्नं वर्जयेत् सदा भवेज्जन्मांतरे रोगी पितॄणां नोपतिष्ठते अत्र
चैत्रपौषयोर्निषेधात् वृश्चिके नवान्नभक्षणासंभवे माघादौ श्राद्धपूर्वकं नवान्नभक्षणं युज्यत एवेति चैत्रे नवान्नभक्ष
णनिषेधादर्थादयवेऽपि नवान्नभक्षणनिमित्तं पववपाकात् पृथक् श्राद्धमापातिवायुपुराणे शुक्लपक्षस्य पूर्वाह्णे श्राद्धं
कुर्याद्विचक्षणः कृष्णपक्षापराह्णे तु रौहिणं तु न लंघयेत् अत्र रौहिणं न लंघयेदिति कृष्णपक्षशुक्लपक्षयोः श्राद्धे रौहि
णं पूर्वापरसीमा तेन शुक्लपक्षश्राद्धे त्ववसानसीमा रौहिणं तदनंतरं न कर्तव्यमित्यर्थः कृष्णपक्षे श्राद्धारंभसीमा रौहिणं
पूर्वं नारंभणीयमित्यर्थः ब्रह्मपु॰ पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकं एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकं मा

वि॰ तकश्राद्धमन्वष्टकाश्राद्धपूर्वाह्णे अत्रापराह्णे पैतृकं कृष्णपक्षापराह्णे शुक्लपक्षे पूर्वाह्णे विधानात् वृद्धिनिमित्तकमाभ्युदयिकमित्य
१९ र्थः मत्स्यपुराणे प्रातःकालो मुहूर्तांस्त्रीन् संगवस्तावदेव तु मध्याह्नस्त्रिमुहूर्तः स्या दपराह्णस्ततः परम् सायाह्नस्त्रिमुहूर्तः स्या
च्छ्राद्धं तत्र न कारयेत् राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु अह्नो मुहूर्ता विख्याता दश पंच च सर्वदा तत्राष्टमो मुहूर्तो यः
स कालः कुतपः स्मृतः मध्याह्ने सर्वदा यस्मान्मंदो भवति भास्करः तस्मादनंतफलदस्तत्रारम्भो विशिष्यते मुहूर्ता दूर्द्धवत
पाद्यन्मुहूर्तचतुष्टयं मुहूर्तपंचकं चैव स्वधावाचनमिष्यते अत्र सर्ववाक्यैकवाक्यतयाऽयमर्थः पंचधा विभक्तस्य पंचद
शमुहूर्तात्मकस्य दिवसस्य प्रातःकालादयः पंचभागास्तेषाम्भ्युदयिकादि श्राद्धचतुष्टयं चतुर्षु भागेषु प्रशस्ततमम् सति संभ
वे तत्रैव कर्तव्यम् यदा तु प्रशस्तमध्याह्नादिकाललाभ एकोद्दिष्टादेर्न भवति तदाऽनिषिद्धसंगवादिकालेषु एकोद्दिष्टादिकं क
र्त्तव्यमिति अत एव पार्वणोऽपि अपरपक्षादावपराह्णालाभे संगवादिष्वपि कर्तव्यतानिषिद्धे काले सर्वेषामनाचरणात् तदर्थं
विवेचयति ऊर्द्धं मुहूर्तादिति कुतपादूर्द्धं मुहूर्तचतुष्टयं मुहूर्तपंचकं कुतपात्पूर्वमार्थात् एकं मुहूर्तं कुतप एव एतन्मुहूर्त
दशकं तत्र स्वधावाचनमिष्यते स्वधा वाच्यते अत्रेति स्वधावाचनं श्राद्धं योग्यमित्यर्थः प्रातर्मुहूर्तद्वयं सायाह्ने मुहूर्तत्रयमि राम॰
ति मुहूर्तपंचकं सर्वश्राद्धेषु निषिद्धम् मनुः रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा संध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते १९

अचिरोदिते इति दिवोपक्रम मुहूर्तद्वयमित्यर्थः विष्णुः संध्यारात्र्योर्नकर्तव्यं श्राद्धं खलु विचक्षणैः तयोरपि च कर्तव्यं यदि स्या॰
द्राहुदर्शनम् स्नानन्दानं तथा श्राद्धमनंतं राहुदर्शने आसुरी रात्रिरत्यंत तस्मात्तां परिवर्जयेत् एतेनान्यत्रापि तात्कालिक श्रा
द्धनिमित्ते पुत्रजन्मादौ सत्ति सर्वदैव श्राद्धं कर्तव्य मित्युक्तं भवति एवं चानग्नेः रावश्यक श्राद्धनिमित्तानि अमावास्या मन्वा॰
चत्तस्रोऽष्टकाः माघी श्रावण्या महापराप पूर्णिमास्तिस्रः आश्विनकृष्णपक्षस्तत्पक्षीयत्रयोदशी गजच्छाया चंद्रसूर्यग्र
हणं व्रीहियवपाकौ तीर्थप्राप्तिः आद्यान्नसत्रावस्थितिः सूर्यस्य नवान्नभक्षणं आभ्युदयिकश्राद्धनिमित्तानि च एषु श्राद्ध
मावश्यकं अकरणे निशेपदेशादिति श्राद्धे प्रशस्तो देशो गंगातीरादिः निषिद्धस्तु देशः महानद्युत्तरं मगधदक्षिणद्वा
दशयोजनावच्छिन्नस्त्रिशंकुदेशः कलिंगदेशः म्लेच्छदेशः शार्करादिसंकीर्णदेशः श्राद्धे प्रशस्तब्राह्मणाः त्रिदण्डियतिः॰
आत्मवित्त वेदवित्त वेदांगवित वानप्रस्थ ब्रह्मचारी असगोत्रः साधुगृहस्थः याज्ञिक पुराणवेत्ता श्राद्धकर्मवित् विष्णुशि
वसूर्यान्यतमभक्तः असमानप्रवरः पितृभक्तः श्वशुरः दौहित्रः गुरुः आचार्यः जामाता ऋत्विक् मातृस्वस्रेयः पितृष्व॰
स्रेयः मातामहः मातुलः भागिनेयः अष्टवर्षपरिणीतासुतः पंक्तिपावनः गायत्रीमात्रसारोपि सदाचारः अथ श्राद्धे नि॰
षिद्धब्राह्मणाः नामंवयेदित्यनुवृत्तौ कात्यायनः द्विनग्नशुक्लविक्लिधि स्यावदंत विद्धप्रज ननव्याधितव्यंगि श्वित्रि कुष्ठि

कुनखिवर्जमितिद्धिर्नग्नोदुश्चर्मास्तुल्कोन्नातिगौरः विक्किधिर्विवर्द्धिकापुत्तः शुल्कविक्किधिः भुल्कांड इतिस्मृतिरत्नविवेकः
षपावर्द्ध्तोजन्मनैवकुत्स्नदंतः विद्धप्रजननश्छिन्नमेढ्रवर्माएवंमित्रंषणुः मूर्खः ग्रामयाजकः देवलकः चिकित्सकः ऋय
विक्रयोपजीवीग्रामप्रेष्यः राजप्रेष्यः गुरुविरोधीनक्षत्रग्रहसूचकः सक्ताग्निः वार्द्धुषिकः पक्ष्मोयपशुपालकः परिवेत्ताः
परिवित्तिः निराकृतिनर्तनशीलअवकीर्णीवृषलीपतिः वंध्यातुवृषलीज्ञेयाद्दवलीतुमृतप्रजा अपराद्दवलीज्ञेयाकुमा
रीपारजस्वीलाः पौनर्भवः काणः गृहावस्थितव्यभिचारिस्त्रीपतिः शूद्रशिष्यः अभिशस्तः कुंडः गोलकः पतितसंसर्गी
अव्रतीक्लीवः योनिदोषवान्दिधिषूपतिः पुत्रपठितः शूद्र पतिः स्त्रीजितः अंगुलातीतकर्णः शिल्पजीवीस्त्रीयाजकः
पतितः श्वक्रीडीदुराचारः ऐंद्रजालिकः पारिदारिकः मातृत्यागी पितृत्यागीदारत्यागोच्चटकपोषकः अकृतविवाहः नास्ति
कः कृपणः असत्यवादी ऋणहर्त्तासर्वथाकेशशून्यशिरस्कः स्त्रीतुल्यवाक्चेष्टः स्वाश्रमविच्युतः पर्याहितः पर्याधा
ता सोदर्येतिष्ठतिज्येष्ठेयेग्न्याधेनंकरोति हितयोः पर्याहितोज्येष्ठः पर्याधाताकनिष्ठकः अग्न्युत्सादक अरण्यदाही
आवसथदाही क्षेत्रसस्यदाही अंगारदाहीसदाव्यसनशीलारक्तकेशः नपुंसकभेदाः षण्डकोवातजः षण्डः क्लीवोप्य।
यनपुंसककीलकश्चेतिषण्डधापक्लीवभेदोविभावितः शूद्रयाजकवांताशीराजकारिनपायचिन्हांकितः वेश्यापतिः शुद्रा

वार्य्यः स्रोतोभेदकः वृक्षारोपणशीलः कन्यादूषकः हिंस्रः वृषलवृत्तिः सदापाचकः श्लीपदी कूटसाक्षीगणयाजकः सूत्रधारः दि
धर्मकृत्येभग्नोत्साहः हीनातिरिक्तांगः साहसिकः कपटतुलाव्यवहारी आत्मंभरिः पुस्तोपघाती कृत्याभिचारशीलः दत्ताप
लापी समयभेदकः पक्षिघाती मीनघाती सर्पघाती कच्छपघाती नानाजंतुवधासक्तश्ववधबंधोपजीवी शूद्रप्रेष्यः मां
सविक्रयी गरदः कुण्डाशी श्येनक्रीडी समुद्रयायी चारणावृत्त्युपजीवी मद्यपः रसविक्रयी केकरः धनुष्कर्त्ता शरकर्त्ता मि
त्रध्रुक् द्यूतवृत्तिः भृतकाध्यापकः भृतकाध्यापितः पित्राविवदमानः दूतः नित्ययाचकः काण्डपृष्ठः स्वकुलं पृष्ठतः कृ
त्वार्थी वै परकुलं व्रजेत् तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः उन्मत्तः गण्डमाली वेदनिंदकः उष्ट्रदमकः गोदकः दतिद
मकः अप्रश्वकालेप्यजातश्मश्रुः गलरोगी छिन्नांगः धर्मविक्रयी अश्वविक्रयी गजविक्रयी लवणविक्रयी लाक्षाविक्रयी
सोमविक्रयी चामरविक्रयी पूर्वदिनेकृतस्त्रीसंगमः पुत्रिकापतिः रजस्वलास्त्रीकः एककूपोदके ग्रामे संवत्सरवासो
न्धः बधिरः पांडुरोगी दण्डाधिकृतः अशुचिः राजद्विष्टः पुरोहितः अनूढापुत्रः अनूढापुत्रपुत्रः अनूढापतिः अनुपा
सितसंध्या अशेषपापरोगिणः उन्मादस्त्वग्दोषो राजयक्ष्माश्वासो मधुमेहो भगंदरो महोदरमश्मरीत्यशेषपापरोगाः अथ
श्राद्धे प्रशस्तकुशाः दक्षिणदिगवस्थितदक्षिणावनतगोकर्णदीर्घः समूलाया आहरिताः श्राद्धदिवसे स्वयं प्रातरुत्पाटिताः

श्रा॰वि॰ पिशाङ्गभूस्तरणी उपमूलसकृच्छिन्नाः श्राद्धकर्तव्यमुष्टिहस्तमिताः योग्यदेशस्थकुशाभावे मुंजश्यामाकदूर्वाकाशवल्वजाः॥
२१ तोक्षारोमाणश्च अथनिषिद्धकुशाः चिताजाताः वर्त्मजाताः यज्ञविनियुक्तस्तरणविनियुक्तासनविनियुक्तपिंडविनियुक्त
पितृतर्पणविनियुक्ताःमेध्यलिप्तनीलीक्षेत्रजातकेर्पासक्षेत्रजाताः श्राद्धेतिलाश्यामाःप्रशस्ताः श्वेतानिषिद्धाः श्राद्धेनि
षिद्धजलेदुर्गंधिजलंपर्युषितजलं अस्पृश्योच्छिष्टस्पृष्टोद्धृतजलम् अंत्यजजलाशयजलं अनुत्सृष्टपरखानितजला
शयजलम् अभोज्यानिपानजलं पतितादिकारितखाततजलम् तर्पणदर्भमंत्रतिलहेमरजतान्यतमरहितंजलंनि
षिद्धम् अथश्राद्धेऽर्घपात्राणि सौवर्णराजतताम्रमयखड्गपात्रमणिमयपात्राणि त्रैवर्णिकनिर्मितानिपलाशादियज्ञी
यवृक्षपात्राणिपत्रपुटकानिवएतान्येवपरिवेषणेभोजनार्थंचपात्राणिप्रशस्तानि अथभोजनेपरिवेषणेचनिषिद्धा
निपात्राणि सीसकमयाऽयोमयपाषाणमयभग्नपात्रक्षुद्रपात्राणिदैवेराजतानिभोजनमृण्मयपात्रम् अथश्राद्धेगंधा॰
दिपंचकम् तत्रगंधाःश्वेतचंदनअगुरुकृष्णागुरुगुडत्वक्कुंकुमकर्पूरपद्मकाष्ठउशीरकुटजजटामांसीगेदिशाणसुगंधि राम
द्रव्यमेतत् नतुतुलस्यनुकारीउग्रगंधी रक्तःसिंदुवारःनिषिद्धगंधाः कस्तूरीसिल्हकादीनि अथपुष्पाणिविहितानिपद्म २१
नीलोत्पलरक्तोत्पलकुमुदचंपकतिलकनगरयूथिकामाधवीकुन्दकुब्जकानवमालिकासेवती कल्हारतुलसीपत्राणि॰

निः[illegible]ेत पुष्पाणि अथनिषिद्धपुष्पाणि अर्कभाण्डीपीताम्लानकृमिकेशादिदुष्टानि उग्रगंधीनि रक्तवर्णं ओड्रपुष्परक्त
करवीरम्अतसुगंधिकुशुमेतरकंटकिवृक्षपुष्पंचैत्यवृक्षोद्भवपुष्पाणि अथश्राद्धे धूपद्रव्याणि सघृतगुग्गुलुसमधुगुग्गुलुच
न्दनाः गुरुउशीरपद्मकाष्ठकर्पूरश्रीखण्डाः तदभावे देवदारुसरलाद्यपि अथनिषिद्धधूपाः केवलघृतकेवलगुग्गुलुत
णगुग्गुलुउग्रगंधे अगंधि अशुचिसंबद्धानिप्राणिजंच कस्तूरिकादिदीपेघृतंतैलंचविहितं तदभावे सार्षपादिस्नेह
प्राणिजस्नेहोदीपेनिषिद्धः श्राद्धेवस्त्रम् नवमनंगलग्नम् शुभ्रंसदशं देयम् संपतौसत्यांवासोयुगम् त्रिपटंवाधौत
कौशेयकंबलादिदानमधिकफलं उपवीतमधिकफलार्थंनत्वावश्यकम् तांबूलादीनि श्रेष्ठतमवस्तूनि गंधदानाद्यवस
रे दातव्यानि तांबूलोपकरणानि पर्णपूगखदिरचूर्णखदिरसारकर्पूरश्रीखंडकस्तूरिएलाकंकोलिलवंगसहकारिद्रव्याणि अ
न्नकर्पूरादीनिपृथगपिदेयानि अथश्राद्धदेशेसन्निधापनीयानि गडकशृंगपात्रश्वेतरक्तनेपालकवस्त्रकृष्णाजिनगौर
सर्षपगौरक्तस्मारणपत्रिविधतिलत्रिदणिपतिरजताः क्षतकुशलाक्ष्णग एतानि श्राद्धंपुनंति अथश्राद्धदेशेऽपसारणीया
निकाककुक्कुरकुक्कुटविड्वराहविडालखरषलीपतिखंजषण्ढाः रजस्वलात्रुटितकर्णापतितः कुष्ठीव्रणीनास्तिकः मद्यपान
कः अशुचिः नग्नः धूर्तः नालकषायवस्त्रः । छिन्नकर्णः लोहः सीमः मलिनोवरः दीर्घरोगी अभिशस्तः उन्मागः अधि

कोगः काणः दासप्रैष्यः मंघपः भोगिनीपतिः भग्नकुलः असतीचंडालः पाषण्डः पर्युषितान्नं एते ९ प्रसापाः एतेषां काकादीना
मन्यतदष्युपहतश्राद्धहविषांत्यागः हविरंतरासंभवे नेष्वेव हविःषु मृद्युक्ताभिरद्भिः पोषणम् तिलगौरसर्षपविकि
रं कृत्वा तैरेव हविर्भिः श्राद्धं कर्त्तव्यम् मातृपितृवंशासवद्वा स्त्रीपाकादिकर्मानुकूलव्यापारे निषिद्धा अथ श्राद्धे विहि
तानि हविर्द्रव्याणि तत्र दुग्धदधिघृतानि गव्यानि गव्यपायसम् तिलतण्डुलमुद्गसाधितकृषरान्नम् अपूपादिशर्क
राक्षीरसंयुक्ताः पृथुकामध्वाक्तलाजाः तिलव्रीहियवाश्चेति शालिसमुत्पन्नधान्यं प्रसातिका प्रसातिका नीवारविशे
षइति हलायुधः प्रसातिका मध्यदेशे शारीताइति प्रसिद्धं धान्यं चतुर्वर्णा सेवश्वेतापीतारक्ताकृष्णाचेति श्राद्धपद्ध
वः मगधदेशेप्रसिद्धं पैषष्टिका अत्रआशुधान्यं मुख्यं श्राद्धे प्रयुज्यते ग्राम्याभिरोषधीभिर्मासंप्रीयंतइति सामान्यतो
विधानात् विशेषानिषेधात् किंचच्छंदोगपरिशिष्टकौटायांशारदं धान्यं षष्टिकादीत्यादि परे नास्त्येव संग्रहेः कृष्णमा
षामुद्गगोधूमश्यामाकनीवारकलायकंगुवंशवीजानि अथ मांसानि गंडकमांसं विषाणसमयानुत्थितशृंगच्छाग
मांसं सर्वलोहितच्छागमांसं गोधामांसं हरिणाविचित्रहरिणकृष्णहरिणाशंवरमृगमेषशशाककूर्माः ९ रुरुयवाराह राम
मांसानि तित्तिरिलावककवर्तकीशद्रकीककर रुषापक्षिणां मांसानि ककरः करानइति प्रसिद्धः वाध्रीणसमांसंत्रिपि २२

वंत्विन्द्रिपक्षीणंश्वेतंवृद्धमजापतिम् वाध्रीणसंतुतंप्राहुर्याज्ञिकाः पितृकर्मणिकृष्णग्रीवोरक्तशिराः श्वेतपक्षोविहंगमः
सवैवाध्रीणसः प्रोक्तइत्येषानैगमीश्रुतिश्छागपक्षिणौवाध्रीणसौ तयोर्मांसंमंत्रसंस्कृतमांसंयदाच्छागादिकंपशुमालभ्य
मांसमुत्पाद्यतेतदाप्रथमंमंत्रेणपशुप्रोक्षणंकर्त्तव्यम्मंत्रश्च ॐपितृभ्यस्त्वाजुष्टंप्रोक्षामिएकोद्दिष्टेतुपित्रेत्वाजुष्टंप्रोक्षा
मीत्यादिरूपः अनालंभपक्षेसिंहादिहतमांसादिषुनमंत्रसंस्कारापेक्षेतिसिंहव्याघ्रहरिणमांसम् लब्धक्रीतच्छागादिमां
सम् प्रस्तराद्यभिघातच्छागादिमांसं अथमत्स्याः महाशल्करोहितराजीवपाठीनश्वेतशल्काश्चान्येपि अथशाकाः का
लशाकं चवास्तूकंमूलकंकलम्बनाडिका वेत्रांकुरंकलापंचपटोलंसार्षपंतथा सूर्यावर्त्तंसुनिष्पन्नंशाकान्याहुर्मनीषिणः
कलम्बनाडिकाकलम्बनाडीवइतिश्राद्धपल्लवःज्यो सूर्यावर्त्तोहुरहुरइतिप्रसिद्धम् सुसिद्धम् सुनिष्पन्नमम्लोनिकषाय
पत्रसदृशपत्रंचौयचीतिप्रसिद्धम् जलप्रभवशाकं पटनाडीशाकंचवास्यांतरात् अथफलानि आम्रपनसकदलीना
लिकेर आमलकीप्राचीनामलकीपद्मबीजखर्जूरतिन्दुककंटकारिकाद्राक्षाकर्मरंगनारंगकलवल्लीदाडिमीदाडिमीति
ल्वाऽम्रातकलकुचबदरीहूपपूगफलपटोलबीजपूरकसीरिकात्रपुष१हपकशृंगाटकमधूकगांभीरिफलपिप्पलीमरि
चकोविदारजलंबूनि पानिफलानि पक्कानिभक्ष्याणितान्यपत्नपक्कानिदेयानिमधूकपुष्पंकोषकंलीरभेदाः तद्विकाराश्चगुडश

 कंराद्यः अन्यान्यपिनिर्दिष्टेतरंस्वादुमधुरफलानिकर्कटीप्रभृतीनिश्राद्धेदेयानिफलान्ययत्नपक्वानिदेयानि अथकंदाः सूरणः
 दीर्घमूलकंकसेरुविषांद्विप्रकारंसर्वेशालूकभेदाः आर्द्रकंविदारीविदारिकंदइतिप्रसिद्धः तालमूलीशतावरी कंदेषु
पयायदभ्यवहरणीयभवति तथाकृत्वादातव्यंतदिति अथव्यंजनसंस्कारकरद्रव्याणिहिंगुजीरकधान्यकहरिद्राशुं
ठीमरिचाऽऽर्द्रकदाडिमीबीजघृततैलंलवणानि सामुद्रिकसांभारिसैन्धवानितैलंतिलभवंसार्षपंच अत्रचमासादी
निव्यंजनान्युपकरणानिचाप्यन्नश्राद्धे आमान्येवदातव्यानि सिद्धान्नश्राद्धेसिद्धान्येवदातव्यानीतिश्राद्धपद्धवःसक्तु
लाजाचिपिटकदुग्धविकारदधिदुग्धघृतगुडलड्डुकादिपक्वान्नानिचाग्निसाधितान्यप्यामश्राद्धेदेयानीतिश्राद्धप
द्धवश्राद्धप्रदीपोऽत्रचकालशाकंमहाशल्काः खड्गलोहामिषंमधु आनंत्यायैकल्प्यंतेपुन्यन्नानिचसर्वशः कालं
शाकंप्रसिद्धम् महाशल्कारोहितप्रभृतयोमत्स्याः खड्गोगंडकः लोहः सर्वलोहितश्छागः तयोर्मांसंमधुक्षौद्रंमुन्यन्ना
निनीवाराः एतैःश्राद्धमनंतपितृतृप्तिजनकम् शर्कराक्षीरसंयुक्ताःपृथुकानित्यमक्षयाः एतैः श्राद्धमक्षयपितृतृप्तिज
नकम् लाजांश्चमधुसंयुक्तान्सक्तून्शर्करयासहश्राद्धेदद्यात् अत्रविहितद्रव्याणांश्राद्धदानेतत्फलेच्छायांसमुच्चयो 
नतुविकल्पःभक्ष्यंभोज्यंचविविधंमूलानिचफलानिच हृद्यानिचैवमांसानियानानिसुरभीणिच उपनेयंसर्वमेतदिति 

मनुवचनात् ततोन्नंवहुसंस्कारैनैकव्यंजनपानवत् वोप्यपे॰ समृद्धं चपयावदुप पादयेदिति देव वाक्याच्च समुच्चयावधा
नात् नैकव्यंजनपानवदित्यपि अनेकव्यंजनविधानं नत्वेकव्यंजननिषेधः वाक्यभेदप्रसंगात् नस्मादनेकव्यंजनस्य
प्राशस्त्यं एकव्यंजनस्यानिषेधात् अनेकव्यंजनस्यालाभेऽनिषिद्धिलादेकमपिव्यंजनमुपादेयमिति विहितद्रव्ये
षु एकद्रव्यदानेनापिश्राद्धस्वरूपनिर्वाहः अथश्राद्धेऽविहिताऽनिषिद्धद्रव्याणि पद्मविल्वहिंगुपिप्पलीमृगादक
दधिसक्तुश्वेतसिविकेमुकमधूकमरिचानि अत्रहिंगुपिप्पलीमरिचानिद्रव्यांतरसंस्कारार्थंदेयानिकेवलानिन दे
यानि परिशिष्टानिविहितालाभेदेयानि अथश्राद्धेनिषिद्धद्रव्याणि केवलजलंवारद्वयसाधितमुद्गाद्यन्नस्पंद्धिस्वि
न्नं उपभुक्ताग्रभागरूपाग्रावन्नेहिते मुष्कंपर्युषितंपरिदग्धंशर्करंकीटपाषाणकेशोपहतंवाग्दुष्टंभावदुष्टंदुष्टाप
हतंश्वासोपहतंवासोवधूतं एतानि विहितद्रव्याण्यपि निषिद्धानि विषहतमांसंव्याघ्रहतंमांसंव्याधिहतमांसंसिंह
हतंव्याघ्रतरतिपंग्वतमांसमंत्राप्रोक्षितालब्धपशुमांसम् महिषीक्षीरहरिणीक्षीरमेषीक्षीरउष्ट्रीक्षीरस्छागोक्षीरचम
सक्षीरएकशफीक्षीराणिप्रशस्तमपिश्राद्धार्थमेमपलूस्वेतिपाविनदुग्धउद्धृतसारंचदुग्धविकाराश्चदध्यादयोनिषिद्धाः
दुर्गंधिजलंस्वल्पजलं॰ जलं पर्युषितजलं अपुविस्रश्च नलं अंत्यजजलाद्यापजलं अप्रतिष्ठितजला शायजलया

निलजलं दर्भमंत्रविरहितदेवरंजनं तदन्यतमरहितजलं अभोज्यान्ननिखातजलं पतितादिकारितजलाशयजलं भूद्वारा...
आहृतजलं ऊषरलवणं कृतलवणं सौवर्चललवणं अलवणव्यंजनं पाकानंतरप्रक्षिप्तलवणव्यंजनं हस्त...
दत्तव्यंजनं हस्तमथितद्रव्यं भूद्रस्पृष्टद्रव्यं अभुदुष्टद्रव्यं छिक्कादुष्टद्रव्यं रसहीनद्रव्यं गंधहीनद्रव्यं पालंकीशाकं ...
डिकाशाकं सोहिंजनशाकं तंडुलीयशाकं तंडुलीपकउरिलया इति श्राद्धपल्लवः खवचिरीशाकं पिप्पलीशाकं रापीशाकं
शेटीशाक कुसुमशाक तुलशीशाकं शणशाकं मरिवशाकं पोपोशाकं नाडिकाशाकं माडिकाकलुपी इति श्राद्धपल्लवव्या
ख्या फलुपीमगधादिदेशे वनयोइरतुल्यताली रुढादौ लगति कूष्माण्डम् अलावुसिंविसाधिसो वृन्ताकं मगिरिणं पिंड
मूलकं वशाकरीरम् कोद्रवं वनकोद्रवं चणकं वोडा अकुरा पुलाकाधान्यं अतसी गौरमाषः मसूरः लसुनः लोहितवृक्ष
निर्यासं पलांडु कठछुति कपित्थ कलजंघा केवलशुंठी केवलमरिचं केवलहिंगु वमनेटीफरहदः पत्तूरकं वकं वास
कः स्थूलकेमुकं स्थूलजंवुफलं कुंभीवंडा लाग्निसुनकाम्यमेध्याग्निचिताग्नयः श्राद्धे निषिद्धाः अग्न्यतराभावे ऽपवित्राते
नानग्नीन् क्रमेण सप्तसुस्थानेषु परंपरया प्रज्वाल्य सप्तमस्थाने प्रज्वालितोग्निरुपादेयः अत्र च श्राद्धे चतुर्विधानि वस्तूनि राम·
...वंति विहितानि विहितनिषिद्धानि अविहितानिषिद्धानि निषिद्धानि विहितलाभे तेषामेवोपादानं तदलाभे विहि २४

तनिषिद्धानामुपादानं तदलाभेः विहिताः निषिद्धानामुपादानं निषिद्धस्य सर्वथा त्यागः इति श्राद्धविवेके प्रथमः परिच्छेदः १
अथाधिकारिणि० तत्र मूलवाक्यानि शुद्धिविवेके लिखितानि सप्रपंचम् इह विस्तरभयादधिकारिमात्रं संसिद्धवल्लिख्य
ते मृतस्य त्रिविधा क्रिया भवति प्रथमा मध्यमोत्तमा चेति तत्र दाहमारभ्याशौचांतदिनपर्यंता क्रिया पूर्वा १ एकादशाहादि
सपिण्डनांता मध्यमा क्रिया २ सपिंडनानंतरं सांवत्सरिकपार्वणाभ्युदयिकनित्यश्राद्धादिरूपोत्तरा क्रिया ३ तत्र त्रिविधाम
स्वपि क्रियासु त्रयोदशविधानामपि पुत्राणामधिकारः ते च त्रयोदश पुत्राः औरस १ पुत्रिकापुत्र २ क्षेत्रज ३ कानीन ४ सहो
द ५ गूढोत्पन्न ६ पौनर्भवा ७ पिविद्ध ८ दत्तक ९ क्रीत १० कृत्रिम ११ स्वयमुपगत १२ पारशवाः १३ तेषु मुख्य औरसः तदभा
वे पुत्रिकापुत्रः ततः पूर्वपूर्वाभावे उत्तरोत्तराधिकारी तेष्वपि पूर्वक्रियायां मध्यमक्रियायां च विभक्तानामविभक्तानां वा मध्ये
योग्यस्य ज्येष्ठस्यैवाधिकारः तदुक्तं स्मृतिसारे अकृते पित्र्ये कृते वापि कनिष्ठादिभिरौरसैः यत्र कुत्रापि ज्येष्ठस्याधिकारः प्रेतक
र्मणीति तस्य क्षतादिना प्रतिबंधे कनिष्ठस्यापि नियतकालकर्तव्यादशाहादिकप्रेतपिण्डनांतक्रियास्वधिकारः सपिण्ड
नानंतरमेवैषां पुत्राणामविशेषेण पृथगधिकार उत्तरक्रियासु एषां त्रयोदशविधानां पुत्राणां लक्षणानि शुद्धिविवेके प्रपंचि
तानि २ त्राभावे पौत्रः पौत्राभावे प्रपौत्रः तदभावे पत्नी तदभावे भ्राता कनीयान तदभावे ज्येष्ठः तदभावे पिता तदभावे भ्रातृपुत्रः तदभावे

श्रा॰ नि॰ पूर्वक्रियायां मध्यमक्रियायां च सपिण्डा अधिकारिणः तदभावे दुहिताऽधिकारिणी तदभावे सकुल्याः तदभावे मातृसपिण्डाः
२५ तदभावे मातृसकुल्याः कुलद्वयाभावे मातरः तदभावे यथाकथंचित् परिगृहीताः स्त्रियः तदभावे राजा देशेन धनग्राहकोऽ
धिकारी पितृगृहीतोऽपि पौत्रप्रपौत्रौ सपुत्रयोरपि पितामहप्रपितामहयोः पार्वणश्राद्धेऽधिकारिणौ मृतस्य कन्याया अविवाहे
कन्याप्रदातापि अधिकारी असमाप्तचूडकर्मस्य मृतस्य पूर्वक्रियामात्रं तत्र भ्रातृपित्रादयोऽधिकारिणः असमाप्तद्विवर्षस्य
पूर्वक्रियापि नास्ति किंतु भूमिनिखननमात्रं स्त्रिया अपि द्विवर्षाभ्यंतरे भूमिनिखननमात्रं तत ऊर्ध्वं विवाहात् पूर्वं पू
र्वक्रियामात्रं तत्र पिताधिकारी तदभावे भ्रात्रादिः ऊढायास्तु त्रिविधा क्रिया तत्र पुत्रोऽधिकारी तदभावे पतिः तदभावे
सपत्नीपुत्रः तदभावे पौत्रः तदभावे प्रपौत्रः तदभावे सपिण्डाः तदभावे सकुल्याः तदभावे पितृसपिण्डाः सप्तपुरु
षावधयः सपिण्डाः दशपुरुषावधयः सकुल्याः शूद्रस्यापरिणीतस्य द्विवर्षादूर्ध्वं पूर्वक्रियामात्रं तत्र भ्रात्रादिरधि
कारी परिणीतस्य त्रिविधापि क्रिया तत्र पुत्रादिरधिकारी पूर्ववत् केचित्तु असमाप्तचूडस्य त्रैवर्णिकस्य स्त्रीशूद्रयो
श्चापरिणीतयोः त्रिविधापि क्रियाऽनुग्रहादिना नत्वावश्यकीत्याहुरिति श्राद्धकल्पस्मृतिसारे गुरुकुलस्थितशि राम॰
ष्यस्य भ्रातृपित्रभावे गुरुरधिकारी गुरोरपि पुत्रपत्नीभ्रातृपितृहीनस्य शिष्यः यजमानस्यान्याभावे ऋत्विगिति ॥ २५

न्यासिनः संन्यासिपुत्रा अधिकारिणः संन्यासिपुत्रैः पितुः सांवत्सरिकैकोद्दिष्टपार्वणाभ्युदयिकतीर्थश्राद्धादीनि कर्तव्यानि
सामान्यविहितानामेषामेकोद्दिष्टादीनां संन्यासिपुत्रैः पातककर्तव्यतांनिषेधकप्रमाणाभावात् यत्तु एकोद्दिष्टं न कुर्वीत
यतीनां चैव सर्वदा अहन्येकादशे प्राप्ते पार्वणं तु विधीयत इति वाक्यं तत्तु न सांवत्सरिकैकोद्दिष्टश्राद्धनिषेधकं एतद्वाक्य
पारिजातनिबन्धादिषु सपिण्डीकरणपर्यन्तैकोद्दिष्टप्रकरणे लेखनेन प्रेतोद्देश्यकषोडशश्राद्धनिषेधकत्वस्यावस्थि
तेः त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते इत्युपसंहाराच्च एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह सपिण्डीकरणाभाव
त्पार्वणं श्राद्धमिष्यते इति शातातपवाक्ये त्रिदण्डग्रहणहेतुकसपिण्डीकरणाभावस्यैकोद्दिष्टनिषेधहेतुत्वेनाभिधा
नाच्च किं चैकोद्दिष्टं जलं पिण्डमशौचं प्रेतसत्क्रियां न कुर्यात्पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे इति दत्तात्रेयवाक्ये वार्षि
कैकोद्दिष्टनिषेधानवगमात् कतिपयानां सांवत्सरिकैकोद्दिष्टावरणाच्च कतिपयानाम नाचरणस्य प्रकरणाच्च तत्रैको
द्दिष्टनिषेधानवगममात्रेणान्यथोपपन्नेन सामान्यैकोद्दिष्टनिषेधावगम्यत इति तत्स्वैकोद्दिष्टं सामान्योक्तैकोद्दिष्टविधिनै
व कर्तव्यम् विध्यंतरानुपदेशात् सर्वैश्च संन्यासिपुत्रैः कर्तव्यं तत्रापि विशेषाश्रवणादिति अत एव पार्वणाभ्युदयिक
तीर्थश्राद्धादिकं पतिपुत्रैः कर्तव्यमेवेति श्राद्धप्रकरणे लिखितं यतः सापिण्डीकरणांता क्रियाः सर्वैरेव निषिद्धेति श्रीद

व न्नोपाध्यायलेखनं स्मृतिसारलेखनं च एकोद्दिष्टकर्तव्यतानिषेधकवाक्यस्य प्रेतोद्देश्यकैकोद्दिष्टकर्तव्यतानिषेधपरत्वं
२६ मर्थं च स्मृतिसारादावप्यवगम्यते संदर्भादिति यत्तु ब्राह्मणादिहते ताते पातेते संगवर्जिते व्युत्क्रमाच्च मृते देयं येभ्य एव
ददात्यसाविति वाक्यं तद्दण्डिनस्त्रिदण्डिसंन्यासिपार्वणश्राद्धनिषेधकं एतद्वाक्यस्यैकदण्डसंन्यासिपार्वणश्राद्धनि
निषेधकत्वात् उशनोवाक्ये तु त्रिदण्डिनां पार्वणविधानादिति गौडीयश्राद्धविवेकः शातातपवाक्येनापि पार्वण
विधानात् वस्तुतो ब्राह्मणादिहतत्वादीनि पितामहप्रक्रमश्राद्धविधायकानि तेन पतिते संगवर्जिते च जीवत्यव
पितरि पार्वणविधायकं संगवर्जितः संन्यासी अथानधिकारिणः महापातकिनः पाषण्डवृत्तयः स्तेनाः व्रात्याः॥
आलस्यादश्रद्धया स्वकर्मत्यागिनः निंदितकर्मकर्तारः गर्भभर्तृद्रुहः स्त्रियः मद्यपास्त्रैवर्णिकस्त्रियः ब्रह्मचारिणः
मातापित्रोराचार्यगुरूपाध्यायानामन्याभावे वहनदहनादौ ब्रह्मचारिणो दोषो न भवति अथोदकदानाद्यनर्हाः
अपथाविधिसंकरजाताः वेदाविहितप्रव्रज्याकर्तारः शास्त्राविहितदेहत्यागकारिणः पाषण्डाश्रिताः स्त्रियो गर्भ
भर्तृद्रुहः मद्यपास्त्रैवर्णिकस्त्रियः वृथा संकरजातादीनामुदकदानादिना दिनकर्तव्यं प्रेतश्राद्धादावपि शर्मादिपदं राम
प्रयोजयति केचित् केचिन्न योजयंति ते तु सपिण्डीकरणं यावत् प्रेतप्रेत इति स्मृतः सपिण्डीकरणादूर्द्ध्वं शर्मवर्मादि २६

स्वर्भागिति वाक्यं प्रमाणयंति तत्रास्माकमुत्तरः पक्षः अथ प्रथमाक्षेपा अत्र गंगादितीर्थेषु अपक्रमिष्यज्जीवितस्य
त्रैवर्णिकस्य नवयज्ञोपवीतवस्त्रमाल्यादिभिः शूद्रस्य स्त्रियाश्च यज्ञोपवीतेतरैर्विभूषणं कुशास्तरणावस्थानं सुचिता
पात्रकं गंगाजलप्रोक्षणं गंगामृत्तिकानुलेपनं शालग्रामशिलासंनिधापनं तुलसीसंनिधापनं शिरसि तुलसीपत्रदानं च
कर्त्तव्यम् तत्र फलार्थितया यथाशक्ति गोभूहिरण्यादिदानेन वद्वारणकारयितव्यम् स्वाकृतपापनिवारणार्थं दीपदा
नं कारयितव्यम् जलतुषारयोरन्यतरेण शरीरार्द्रीकरणं तदसंभवे जलतुषारयोः कयापि कार्या ओमित्येकाक्षरं
ब्रह्म व्याहरन् मामनुस्मरन्नित्युक्ते ब्रह्मविष्णुस्मरणयोरन्यतरस्मिन्परमगतिप्राप्तिः फलमतस्तदर्थिना तत्करणं पुरुष
[illegible]कादिय्यवर्णं अपगतप्राणस्य मुखनिःक्षिप्तकांस्यमणिप्रवालहिरण्यशकलस्य नासिकद्वयकर्णद्वयचक्षुर्द्वयनि
[illegible]सप्तसुवर्णशकलमात्रस्य घृततैलसमायुक्तस्य देहशोधनं विधाय स्नापितस्य बर्हिष्मत्यां भूमौ दक्षिणशिरसास्थापि
[illegible]घृततैलाभ्यक्तिस्य चंदनोक्षितसर्वांगस्य वस्त्रापिहितमुखस्य पुष्पैर्विभूषितस्य शुद्धवस्त्रोपवीतिनो गुरून नु
[illegible]स्य पुत्रादिभिर्हरणं कुर्यात् मृतद्विजं सजातीयेषु तिष्ठत्सु न शूद्रान्येयुः न मृतं शूद्रं द्विजाः ब्राह्मणकर्तृकानाथब्राह्म
णकर्मकनिर्हरणकर्तुः स्वर्लोकभागित्वं फलं द्विजकर्तृकानाथब्राह्मणकर्मकनिर्हरणे निर्हरणक्रियासंबंधिकर्तृपद

का०दि० मलसंख्ययज्ञफलसमफलम् धनंजयवाप्यपगमपर्य्यन्तंमृतस्पर्शनेधीराणाम् द्विजसंस्कारोपयुक्तानाग्नतृणकाष्ठहवि
ष्याद्युदकर्जकानयनंनिषिद्धम् द्विजशवंशूद्रोनस्पृशेत् ततः स्नातः पुत्रादिर्दक्षिणशिरसंशवंकृत्वागयादीनिच
तीर्थानियेचपुण्याः शिलोच्चयाः कुरुक्षेत्रंचगंगाचयमुनाचसरिद्वरा कौशिकीचंद्रभागाचसर्वपापप्रणाशिनी भद्रा
वकाशासरयूगंडकीतमसातथावेणंवेचवराहंचतीर्थंपिण्डारकंतथापृथिव्यांयानितीर्थानिचतुरःसागरांस्तथा एता
निमनसाध्यापन् जलेसर्वतीर्थान्यावाह्यतेनजलेनशवंसंस्नाप्यशुचिदेशेयथामिलितदासवर्णापरिचितदारुचय
रचितचितायामास्तीर्णकुशायामुत्तरशिरसोऽधोमुखस्यसवस्त्रस्यपुरुषस्यस्त्रियाश्चोत्तानदेहायाउत्तरशिरसः
स्थापनंकुर्य्यात् ततोगयादीनिचतीर्थानियेचपुण्याः शिलोच्चयाइत्यादि पूर्वोक्तंपठित्वा एतानितीर्थानिदेवाश्चाग्नि
मुखान्सर्वेकृतस्नापनमेनंगतायुषंदहं त्विति मनसाध्यात्वाऽपसव्येनदक्षिणामुखोहुताशनंगृहीत्वा कृत्वासुदुष्कृ
रंकर्मजानतावाप्यजानतामृत्युकालवनेजनस्थानेपिण्डंदद्यात विहितकालेप्यकृतचूडाकरणस्यविहितकालेप्य
कृतोपनयनस्यभूमावपि पिण्डंदद्यात् ततः प्रस्रवनेजनदानं अद्यामुकगोत्रपितरमुकप्रेतशिरःपूरकप्रथम एम.
पिण्डेऽत्रप्रस्रवनेनिक्ष्वमयादीपते तवोपतिष्ठतामितिपिण्डोपरिपूर्ववद्दद्यात् ततः प्रेतमुद्दिश्यपत्त्रस्मीमेवगंधतु २७

ष्पधूपदीपोर्णातंतुमयंमुद्द्वद्दवस्त्रतांबूलानि पिण्डे मयादीयते तवोपतिष्ठतामिति पिण्डोपरि पूर्ववद्दद्यात् ततः प्रेतमु
द्दिश्य तूष्णीमेव गंधपुष्पधूपदीपोर्णातंतुमयमुद्द्वहुवस्त्रतांबूलानि पिण्डे दद्यात् ततो यावद्बाष्पं निःसरति तावत्पि
ण्डाभिमुखस्तिष्ठेत् ततोपसव्यादिनैव ॐ अद्यामुकगोत्र पितरमुकप्रेत एष सतिलतोयांजलिस्ते मयादीयते तवोप
तिष्ठतामित्येकं तिलतोयांजलिं पिण्डोपरि दद्यात् एवं पिण्डसमीपे एव ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं तिलतो
यपूर्णपात्रं ते मयादीयते तवोपतिष्ठतामित्येकं तिलतोयपात्रं दद्यात् पश्चाज्जले सर्वं क्षिपेत् तत उपलिप्तायां भूमौ माल्य
पानीयं दीपं च निधाय ॐ अद्यामुकगोत्र पितरमुकप्रेत इदं माल्यं ते मयादीयते तवोपतिष्ठतां ॐ अद्यामुकगोत्र पि
तरमुकप्रेत इदं पानीयं ते मयादीयते तवोपतिष्ठतां ॐ अद्यामुकगोत्र पितरमुकप्रेत एष दीपस्ते मयादीयते तवोप
तिष्ठतामिति दद्यात् सायंकाले गृहद्वारि प्रेतमुद्दिश्य दशरात्रं त्रिरात्रं वा दीपं दद्यात् रात्रौ गोमयोपलिप्तायां भूमौ
त्रिकाष्ठिकासमारोपितमृन्मयपात्रद्वये जलं क्षीरं च निधाय ततः समीपे माल्यं दीपं च धृत्वा ॐ अद्यास्यां रात्रौ अमुक
गोत्रपितरमुकप्रेतात्र स्नाहि इदं पिब इदं परिधेहि अनेन पथ्येति निवेदयेत् व्याकारणाधिकरणकरणाक दशरात्र
[illegible]न्नप्रेतोद्देश्यकधृतजलदानं सर्वपापशांत्यध्वश्रमविनाशफलम् रात्रौ मृतके सूर्योदये दिवा मृतकेन क्षत्रो

प्रा॰ चिं॰ दयेवहिर्भयादौ वाल्लरणानुमत्याऽग्रीगपिवालपुरःसरावृद्धपश्चिमाः क्रमेणागृहद्वारमागत्य तत्रैव निंवपत्राणि दंतै

२८ श्छित्त्वा वस्यदक्षिणेन पाणिना ॐ शमी पत्रं शमयतु इति शमीं ॐ अश्मेव स्थिरो भूयासमित्यश्मानं ॐ अग्निर्नः श

र्म यच्छत्वित्यग्निं स्पृशेत् वृषभच्छागयोर्मध्ये स्थित्वा ज्योगिनिमं त्रेणादक्षिणेन पाणिना द्वावपि स्पृशेत् ततोऽश्म

निपदन्यासं कृत्वा चम्योदकगोमयगौरसर्षपाग्निदूर्वाप्रवालवृषभान्संस्पृश्य गृहं प्रविशेयुः एतच्च कुलांतरस्त्रिया

उदकदाने स्त्रीलिंगेन निर्देशः कर्त्तव्य इति विशेषः इयं च जलदानक्रियादशमपुरुषपर्यंतं कर्त्तव्या समानग्रामवासेया

वद्यासंसंबंधमनुस्मरेयुस्तावत्तर्पयेयुः श्वशुरमातामहमातुलाचार्यशिष्यसहाध्यायिमित्रदुहितृभगिनीभागिने

यराजर्त्विजां तद्वितैषिभिः काम्यमुदकदानं कर्त्तव्यम् पतितापविद्धसर्वगामिनीवृथासंकरजातप्रव्रजितात्मत्यागिपा

षंडिगर्भभर्त्तृहर्त्तृसुरापि द्विजस्त्रीणामुदकक्रियां न कुर्यात् पातितस्य तृप्तिमिच्छन्सर्वगामिनीं दत्त्वेतनां दासीमा

हूय शुद्धघटं हस्तां व्रूयात् हे दासि गच्छ मूल्येन तिलानानयस त्वरम् तोयपूर्णं घटं तं च सतिलं दक्षिणामुखी ऽप

विश्य तु वामेन चरणेन ततः क्षिपेत्कांत्र्ये सातकी संज्ञां त्वं पिबेति वदन्मुहुः इत्युक्त्वा चैव सा दासी मृतां हनिपातकी सं राम॰

ज्ञां कीर्त्तयित्वा अमुकप्रेत त्वं पिबेति पुनः पुनरभिधाय वामपादेन तोयपूर्णं सतिलं घटमपवर्ज्जयेत् न तउदकदाना २९

[illegible]रेमुदको जीर्णान् कृतवस्त्रांतरपरिधानानावांतान् पुत्रादीन् शुचिशाद्वलेदेशे ऽपविष्टान् नायमत्यंतसंवासः क
[illegible]चिरेणवित्तसह अपि स्वेनशरीरेण किमुतान्यैः इयाज्जनैरित्यादिमहाभारतादिवाक्यानि श्रावयित्वाऽपनीत
[illegible]कान्बंधुजनाः कुर्युः ततः पुत्रादिर्नगुडमादाय मृन्मयेन नूतनेन नूतनभांडेन जलमानीय ग्रामाद्वहिर्देवताय
[illegible]नेगृहद्वारिवासुचितीरेवापिण्डदानादेशान्यांदिशि अग्निंप्रज्वाल्य तंडुलप्रस्थतिद्वयं प्रक्षाल्य सुभृतं स्वयंपक्वे
त् ततो दक्षिणाप्लवने भूभागे गोमयोपलिप्ते गौरमृत्तिकयापिण्डार्थं दक्षिणाप्लवणं स्थानं निर्मायावांतः कृता
पसव्यो दक्षिणामुखः पातितवामजानुः पिण्डस्थानोपरि दक्षिणाग्रं कुशत्रयमास्तीर्य पुटकादौ जलतिलगंधपु
ष्पाणि प्रक्षिप्य तत्पात्रं वामहस्ते कृत्वा मोटकातिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत शिरःपूरकप्रथ
म[illegible]ण्डस्थाने ऽत्रावनेनिक्ष्व ते मयादीयते तवोपतिष्ठतामिति कुशत्रयोपरि अवनेजनं दद्यात् ततस्तिलघृतमधु
युक्तं दुग्धसिक्तं तत्रमेव पिण्डमादाय मोटकतिलजलानि चादाय ओं अद्यामुकगोत्रपितरमुकप्रेत एष शिरः पू
रकः प्रथमः पिण्डस्ते मयादीयते तवोपतिष्ठतामिति कुशोपरि अवशंपाशनेनरं पंचत्वमागतं धर्माधर्मसमायुक्तं
[illegible]लोभमोहसमावृतं दहेयं सर्वगात्राणि दिव्यांल्लोकान्सगच्छतु शीघ्र इति मंत्रमुच्चार्य प्रदक्षिणं विधाय ज्वलदुल्मुक

नि स्वशिरोदेशे दानं मंत्रस्याप्यमदृष्टार्थत्वात् स्त्रीदाहेप्यविकृत एव पठनीयः पुंस्त्वस्याविवक्षणात् क्षत्रियकर्तृके वैश्यक
१९ र्तृके चानाय ब्राह्मण दाहे वैश्यकर्तृकेन शूद्रसर्वस्वानायराजदाहे पितृमेध्ययज्ञफलसमफलम् ततस्तृणकाष्ठा
दि घृतं परिक्षिप्य दग्ध्वा किंचिच्छेषयेत् ततः प्रादेशमात्रसप्तकाष्ठिकाभिः सह प्रदक्षिणासप्तकं विधाय कु
ठारेणोल्मुकोपरि प्रहारसप्तकं कृत्वा क्रव्यादाय नमस्तुभ्यमित्युक्त्वा एकैकां काष्ठिकामग्नौ क्षिपेत् अनतीतद्विवर्षं
प्रेतं गंधमाल्यादिभिरलंकृत्य अहरहर्नयमानो गामश्वं पुरुषं पशून् वैवस्वतो न तृप्यति सुरापइव दुर्मतिरिति यम
गाथां गायंतो वान्यवा ग्रामाद्बहिः शुचिदेशे निखनेयुः तत्र नोदकदानादि अयोदकदानादिः तत्र प्रेतदाहानंतरं
सर्वे ज्ञावस्पृशः शवानुगमनकर्तारश्च चितां वामावर्तेन परावर्त्य व्यावर्त्य प्रेतमनवलोकमानाः अहरहर्नयमानो
गामश्वं पुरुषं पशून् वैवस्वतो न तृप्यति सुरापइव दुर्मतिरिति यमगाथां गायंतो नदीप्रवाहाज्जलाशया तटं वाला
नग्रेकृत्य गच्छेयुः ततः श्यालकमन्यं वा याचेरन्नुदकं करिष्यामइति स ब्रूयात् कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते
कुरुध्वमेवेतरस्मिन्निति ततः कृतापसव्या दक्षिणाभिमुखाः प्रकीर्णकेशाः प्रक्षालितैकवस्त्रधराः ॐ अपनः शो
शुचदघमितिवामहस्तानामिकयाऽपोदक्षिणतो नीत्वा सकृन्निमज्जेयुः ततो वामहस्तानामिकयाकनिष्ठया पाप

मित्यपो वह्निरवेयुः अंगं चन विघर्षेयुः ततो द्विवाससस्याचम्य जले वा पाषाणश्चे वा सुचितोरदेशे वा दक्षिणाग्रकुश
त्रयोपरि वामहस्तान्वारब्धदक्षिणाहस्तांगुष्ठतर्जनीमध्यात्मकपितृतीर्थेन द्विगुणभुग्नकुशत्रयेण प्रेतगोत्रनामनीउ
च्चार्यामृतं मनसाध्यायंतः कुशहस्ताः प्रेतायसतिलजलांजलिं दद्युः ॐ अद्यामुकगोत्रपितरमुकप्रेत एष तिलतोयां
जलिस्तेमयादीयते तवोपतिष्ठतामिति वाक्येन ततः कंकतिरूपेण वाममुष्टिना वलिखितं पापमिति सव्यांगमेव लि
खेयुः जातानामपि शवस्पृशामपि कर्तव्यम् ज्ञातयो नैव तस्यां रात्राव पचेयुः यावदाशौचं मृण्मयपात्रे पत्रपुटे
पाणौ वा क्रीतं लब्धमनामिषं दिवा भुंजीरन्नेककालं त्रिरात्रमक्षारलवणाशिनः द्वादशरात्रं महागुरुषु मातापिताऽऽ
चार्यश्चेति महागुरवः सर्वे ब्रह्मचारिणो दीनामलिनवाससो भोगवर्जिताः शास्त्रपाणयोऽधउपवेशिनः पृथक्क्षि
तौ शयीरन् उपवेशने शयने च तृणप्रस्तरणमुपासीरन् प्रेतक्रिया वर्जमनावश्यकं न किंचित्कर्म कुर्युः पंचमसप्तम
नवमदिवसेषु सर्वेषामेव सपिण्डानां बहिः स्नानं तिलोदकदानं च वस्त्रप्रक्षालनं सहभोजनं च तुर्य्यश्च श्मशानगृहे
पिंडीप्रदानमंगसंवाहनं च तैलाभ्यंगजागरादिकं प्रेताप्यायनकरम् प्रथमपिंडवत् द्वितीयादिषु दिवसेषु द्वितीयाद्
दिपिंडदानम् तत्र विशेषः द्वितीयदिने पिंडदानवाक्ये कर्णाक्षिनासिकापूरको द्वितीयः पिंडः द्वे तिलतोयांजली द्वे

त्रिल तोयपात्रे त्रितोयदिने गलांसभुजवक्षः पूरकस्तृतीयः पिंडः त्रयस्तिलतोयांजलयः त्रीणि तिलतोयपात्राणि चतु
[illegible] नाभिलिंगगुदपूरकश्चतुर्थः पिंडः चत्वारस्तिलतोयांजलयः चत्वारि तिलतोयपात्राणि पंचमदिने जानुजंघा
[illegible] पंचमः पिंडः पंचतिलतोयाञ्जलयः पंचतिलतोयपात्राणि षष्ठदिने सर्वमर्मपूरकः षष्ठः पिण्डः षट्ति
[illegible] तोयांजलयः षट्तिलतोयपात्राणि सप्तमदिने सर्वनाडीपूरकः सप्तमः पिंडः सप्ततिलतोयांजलयः सप्ततिल
तोयपात्राणि अष्टमदिने दंतलोमादिपूरकोऽष्टमः पिण्डः अष्टौ तिलतोयांजलयः अष्टौ तिलतोयपात्राणि नवम
दिने वीर्यपूरको नवमः पिण्डः नव तिलतोयांजलयः नव तिलतोयपात्राणि दशमदिने पूर्णत्वतृप्तताक्षुद्विप
र्ययपूरको दशमः पिण्डो देयः दश तिलतोयांजलयः दश तिलतोयपात्राणि अन्यत्सर्वं समानं तथा हि शिरस्त्वाद्
येन पिण्डेन प्रेतस्य क्रियते सदा द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः गलांसभुजवक्षांसि तृतीयेन यथाक्रमा
त् चतुर्थेन तु पिंडेन नाभिलिंगगुदानि च जानुजंघे तथा पादौ पंचमेन तु सर्वदा सर्वमर्माणि षष्ठेन सप्तमेन तु नाडयः
दंतलोमाद्यष्टमेन वीर्यन्तु नवमेन तु दशमेन तु पूर्णत्वं तृप्तिताक्षुद्विपर्ययः क्षत्रियवैश्यशूद्राणां संपूर्णाशौचेन वसु राम.
दिनेषु नव पिंडान्दत्वाऽशौचांतदिने दशमपिंडदानं ह्याशौचे ब्राह्मणादिभिः सर्वैः प्रथमदिवसे त्रयः पिण्डादात ३०

त्र्याः द्वितीयदिने चत्वारः तृतीयदिने त्रयः पिंडा देयाः अथवा प्रथमादिवसे चत्वारः तृतीयदिवसे पंच एवं दश पिंडा दा
तव्याः सद्यः शौचे त्वेकाहे नैव दश पिण्डा दातव्याः असंपूर्णाशौचान्तरेण केके पिण्डमेकैकस्मिन्दिने दत्वांतिमदिने
ऽवशिष्टाः पिण्डा देयाः पाकासंपत्तौ फलमूलशाकगुडदुग्धशालिसक्तूनामन्यतमेन पिंडो देयः येनक्रमेण प्रथम
पिण्डो दत्तस्तज्जातीयेनैव पिण्डांतरमपि दद्यात् पुत्राद्यधिकारिणि विदेशस्थेऽन्येन दाहकर्त्रा पिंडदाने कृतेपि
पुत्रादिरपि पिण्डं दद्यात् येनैव प्रथमः पिण्डो दत्तः स एव पिण्डांतरमपि दद्यात् अथास्थिसंचयः चतुर्थे ब्राह्मणा
नां तु पंचमे हनि भूभुजां नवमे वैश्यजातीनां शूद्राणां दशमात्परे कर्तव्यं तु नरैः श्राद्धं देशकालाविरोधतः श्राद्धमत्रास्थि
संचयनिमित्तकम् एतच्च संपूर्णाशौचेयदिनकथनम् एवमशौचेनांगस्पर्शोपि चतुर्थे हनि विप्रस्य षष्ठे वैश्यक्षत्रिय
स्य तु अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः यत्तु प्रथमे ह्नि तृतीये वा सप्तमे नवमेपि वा अस्थिसंचयनं कार्य्यं निजै
स्तद्गोत्रजैः सहेति स्मृतिवाक्यं तद्ब्राह्मणादीनां चतुर्थादिदिनेष्वस्थिसंचयासंभावनायां प्रथमादिदिवसेष्वस्थिसंच
यविधायकम् त्र्यहाशौचे तु द्वितीये ह्नि सद्यः शौचे तद्दिन एवास्थिसंचयः कर्तव्यः असंपूर्णाशौचांतरे तु तृतीयभागोत्तर
मस्थिसंचयोऽङ्गस्पर्शश्च कर्तव्य इति अथप्रयोगः चतुर्थदिने स्नात्वा चतुर्थं पिण्डं दत्वा श्राद्धदेशस्य गोमयोपलेपनपंच

श्रा·दि· णस्योपलेपनं अवलदं गारभामणागौरमृत्तिकाच्छादनानिकारयित्वागौरसर्षपैस्तिलैश्चनिकरणांस्वयंच श्राद्धकर्त्तोपा
३१ कमारभेत ततः सिद्धेन्ने रक्षादीपं संस्थाप्य श्राद्धदेयानिवस्तून्यासाद्याचम्य पूर्वाभिमुखउपविश्य ॐ अपवित्रः
पवित्रोवाइत्यादि पठित्वापुण्डरीकाक्षः पुनात्विति श्राद्धीयवस्तूनां कुशत्रयजलेनसेचनं ततः ॐ अद्यामुकगोत्रस्य
पितुरमुकप्रेतस्यास्थिसंचयनिमित्तकमेकोद्दिष्टश्राद्धमहंकरिष्य इति संकल्पं कुर्यात् ततस्त्रिर्गायत्रींजपित्वा
ॐ देवताभ्यइतित्रिर्जपेत् ततोऽपसव्यं कृत्वामोटकतिलजलान्यादाय दक्षिणाभिमुखः सव्यंजानुपातयित्वा ॐ
अद्यामुकगोत्रपितरमुकप्रेत अस्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धइदमासनंतेमयादीयते तवोपतिष्ठतामित्या
सनं मोटकरूपमुत्सृजेत् ततॐ अपहताऽअसुरारक्षा ꣳसिवेदिषद इतिश्राद्धदेशेवामावर्त्तेन तिलान्विक्षि
पेत् ततॐ आयन्तुनइतिमंत्रंजपेत् ततःपुटकेकुशपत्रद्वयंप्रादेशमात्रं दक्षिणाग्रंधृत्वा ॐ शन्नोदेवीरभिष्टयइ
तितत्रजलंदद्यात् ॐ तिलोसीतितिलान्दद्यात् तूष्णींगंधंपुष्पंचतत्रक्षिपेत् ततस्तदर्घपात्रं वामहस्तेकृत्वाकुशपत्र
द्वयंपरिवेषणपात्रे उत्तराग्रंधृत्वातदुपरि[illegible]च्छिद्रंकांतरंदत्वा ॐ पाद्यिव्याऽआपइत्यादिपठित्वामोटकादीन्यादायॐ एम·
अद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धएषहस्तार्घस्तेमयादीयतेतवोपतिष्ठतामितिपवित्रो ३१

परि अर्घजलं दद्युत्सृजेत् ततः पवित्रपुष्पसहितमर्घपात्रमात्रमासनवाम पार्श्वे पित्रे स्थानमसीति अधोमुखं कृत्वा
स्थापयेत् ततो मोदकादीन्यादाय ओं अद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धे एता निगंधपुष्प
धूपदीपतांबूलयज्ञोपवीतवासांसि ते मया दीयंते तवोपतिष्ठंतामिति गंधादीनि दद्यात् ततो जलेनासनभोजनपात्र
योश्चतुर्दिशं मण्डलं कृत्वा श्राद्धीयान्नाग्रभागं सघृतव्यंजनतिलजलं ओं इदमन्नमेतद्भूस्वामि पितृभ्यो नमः इति उत्सृजेत्
ततो हस्ताभ्यां ताम्रपात्रमन्नपूर्णमादाय मनाक् स्थित्वा पितरन्ध्यायन् पुरुषत्रिक्षम मन्नं परिविष्यात् व्यंजनघृतज
लान्युपनीय अन्नोपरि मधु दत्वा ओं मधुवाता इत्यादि त्र्यृचं ओं मधु मध्विति च जपेत् ततोऽन्यस्ताभ्यां हस्ताभ्यामधोमु
खाभ्यां पात्रमालभ्य ओं पृथिवी ते पात्रमिति जपेत् ओं इदं विष्णुरिति जपेत् कव्यकव्यमिदं रक्ष मदीयमिति पठित्वा ओं
इदमन्नम् ओं इमा आपः ओं इदमाज्यम् ओं इदं हविरिति अन्नजलघृतान्नेषु दक्षिणहस्तांगुष्ठं निवेश्य ओं अप
हता इति तिलानन्नोपरि क्षिप्त्वा वामहस्तेन पात्रमत्यजन् दक्षिणहस्तेन मोदकादीन्यादाय ओं अद्यामुकगोत्र पितर
मुकप्रेतास्थिसंचयननिमित्तकैकोद्दिष्टश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ततो गा
यत्रीं मधुवाता इत्यादि त्र्यृचं ओं मधु मधु मध्विति ओं अन्नहीनं क्रियाहीनमिति च जपेत् ततः कुशेषूपविश्य गायत्रीम

श्रा॰ वि॰ शुद्धवन्ताइत्यादिकं जपेत् ततऊँ कृणुष्वपाजइत्यादि रक्षोघ्नीः ऊँउदीरतामित्यादि पितृमंत्रान् पुरुषसूक्तम् आशुः शिशा
३२ नइत्यादिकं अप्रतिरथमन्त्रानि च पवित्राणि यथाशक्ति जपेत् ऊँनमस्तुभ्यमिति श्लोकं च जपेत् ततउच्छिष्टसन्निधा
वास्तृतकुशत्रयां भूमिं जलेन प्रोक्ष्य तिलघृतसहितमन्नं जलेनाप्लाव्य ऊँअग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम इ
त्यादिमंत्रेण कुशोपरि अन्नं विकिरेत् ततः सव्यं कृत्वाचम्य हरिं स्मृत्वा अपसव्यं कृत्वान्नपात्रसमीपे पिण्डदानार्थं
मृत्पिण्डिकायाम् मध्ये प्रादेशमात्रं परिमाय वामान्वारब्धदक्षिणहस्तेन ऊँअपहताइत्यादिना तद्विलिख्य दर्भपिञ्जुली
मुत्तरस्यां दिशि क्षिप्त्वा रेखोपरि ऊँये रूपाणीति मंत्रेणाङ्गारं भ्रामयित्वाङ्गारं दक्षिणतः क्षिपेत् ततो रेखोपरि छिन्नमूला
न्कुशानास्तीर्य्य ऊँदेवताभ्यइति सव्येन त्रिर्जपेत् ततोऽपसव्येन पुटके जलतिलगन्धपुष्पाणि क्षिप्त्वा पुटकं वामहस्ते
कृत्वा मोटकादीन्यादाय ऊँअद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धपिण्डस्थाने अत्रावनेनि
क्ष्व ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनजलं किंचिद्दद्यात् ततो घृतमधुतिलयुक्तेनान्नेन पिण्डं नि
र्माय घृतमध्वभिधारितं पिण्डं मोटकादीनि चादाय ऊँअद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्रा राम॰
द्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि वामान्वारब्धदक्षिणहस्तेन पिण्डं दद्यात् तत आस्तृतकुशमू ३२

लेत् स्त्रींकरं प्रोक्ष्य सव्यंकृत्वाचम्यापसव्यंकृत्वाॐ अत्र पितर्मादयध्वमित्यादिमंत्रंपठित्वाउत्तराभिमुखीभूयश्वासनिरोधंकु
र्यात् पितरंभास्वरमूर्त्तिंध्यायन् अमीमदन्तपितायथेत्यादिनाऊहेनजपेत् ततः पूर्वावशिष्टजलमवनेजनपात्रेत्वा
महस्तेकृत्वामोदकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेतास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धपिण्डे अत्रप्रत्यव
नेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिप्रत्यवनेजनंदद्यात् ततोनीवींविस्रंस्यसव्यंकृत्वाचम्याहरिंस्मृत्वाअपसव्यंकृ
त्वावामहस्तेनसूत्रमादायकराभ्यांतद्गृहीत्वाएतत्तेपितर्वासः इतिसूत्रंपिण्डोपरिधृत्वाॐ अद्यामुकगोत्रपितरमुकप्रे
तास्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धपिण्डे एतद्वासस्तेमयादीयतेतवोपतिष्ठतामितिमोदकादिनादद्यात् ततःपि
ण्डेगंधपुष्पधूपदीपतांबूलैरभ्यर्च्यपिण्डशेषान्नंपिण्डसमीपेविकिरेत् ॐ शिवाआपः संतु ॐ सौमनस्यमस्तु ॐ
अक्षतंचारिष्टमस्तुइतिअन्नपात्रेजलादीनिदत्वामोदकादीन्यादाय ॐ अद्यामुकगोत्रस्यपितरमुकप्रेतस्या
स्थिसंचयनिमित्तकैकोद्दिष्टश्राद्धेदत्तैतदन्नपानादिकमुपतिष्ठतामित्युत्सृजेत् ततः सव्यंकृत्वादक्षिणांदिशंप
श्यन् ॐ अघोरः पितास्त्वितिपिण्डोपरिपूर्वाग्रांजलधारांदद्यात् ततः पूर्वाभिमुखः ॐ गोत्रंनोवर्द्धतांदातारोनोभि
वर्द्धन्तांवेदाः संततिरित्यादिनाआशिषोयाचेत ततोऽपसव्यंकृत्वापिण्डोपरिस्थपवित्रान् कुशानास्तीर्यपुरकादि

मन्त्रेन ॐ ऊर्ज्जंवहंतीरमृतंघृतंपयइत्यादिपठित्वा कुशोपरिदक्षिणाग्रांजलधारां दद्यात् ततः पिराड माघ्रा गोत्था
च्छिन्नमूलकुशणंनगारं चाग्नौदहेत अर्घपात्रमुत्तानीकृत्यमोटकादीनिदक्षिणाद्रव्यं वादाय ॐ अद्यामुकगोत्रस्य। प
रमुकप्रेतस्यकृतैतदस्थिसंचयनिमित्तकैकोद्दिष्टषाड्प्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणा
यदक्षिणांदातुमहमुत्सृजे इति दक्षिणांदद्यात् ततः सव्येन त्रिर्दैवताभ्य इति जपित्वाऽपसव्यंकृत्वादीपंनिर्वाप्यहस्तौ
पादौप्रक्षाल्यसव्येनाचम्य ॐ प्रमादादित्यादिपठित्वाविष्णुंस्मरेत् श्राद्धीयवस्तूनिब्राह्मणायप्रतिपादयेत् जले
वाक्षिपेत् ततःपुत्रादिर्ज्ञातिबंधुमिलितः स्नातः सुधौतवस्त्रोनानाविधफलमूलभक्ष्यपानादिभिः स्वज्ञात्यनुस्रै
रष्टैःपात्राणिपूरयित्वागंधपुष्पधूपदीपादिकंचगृहीत्वाश्मशानसमीपमागत्यत्वरान्वितैः कैश्चिदर्घैः कैश्चित्पुष्पैः
कैश्चिद्भोजनैः कैश्चिद्धूपैः कैश्चिद्दीपैः कैश्चिन्माल्यैः कैश्चित्पानीयैः कैश्चिदक्षतैः सर्वं निवेदयेत् कैश्चिन्निरहंकार
युक्तैः समंततश्चतुर्षुअन्नादिपूर्णपात्रेषुनिवेदितेषुप्रथमंचितायाउत्तरद्वारसमीपेउपविश्य ॐ नमः क्रव्यादमुखे
भ्योदेवेभ्यइतिसर्वदायेऽस्मिन्श्मशानेदेवाःस्तुभगवतःसनातनाः तेस्मत्सकाशाद्ग्रह्णंतुवलिमष्टांगमक्षयम्
प्रेतस्यास्यशुभान्लोकान्प्रयच्छंतुचशाश्वतान् अस्माकमायुरारोग्यंसुखंचददतांवरं इति पठित्वा ॐ एषोऽष्टां

गवलिःशंकरादिदेवताभ्योनमः इत्येकंबलिंदत्वाएवंप्रदक्षिणक्रमेणापरंबलित्रयंत्रिषुद्वारेषुदत्वातान्बलीन्क्षीरेणा
भ्युक्ष्यशंकरादिदेवताःस्वीयस्वीयस्थानंगच्छंत्वितिदेवताविसृज्यावशिष्टक्षीरेणवाग्यतःचितास्थान्यस्थीनि अभ्यु
क्ष्यप्रथमंशिरोस्थीनिशमीपलाशशाखाभ्यामुद्धृत्याज्येनाभ्युक्ष्यगन्धवारिणासिक्त्वाकृतापसव्योदक्षिणांगुष्ठका
निष्ठाभ्यांगृहीत्वाततोऽन्यान्यपि अस्थीनिगृहीत्वापंचगव्येनसुगंधिवारिणासिक्त्वापलाशपुटेनिक्षिप्यक्षौमवस्त्रे
णसंवेष्ट्यमृन्मयेनूतनभांडेसाच्छादनेननिदध्यात् तद्भांडमरण्येवृक्षमूलेवापंकशैवालयुतगर्त्तेवानिभृतंनिधा
पयेत् चिताभस्मादितोयेनिक्षिपेत् गोमयांबुभिश्चिताभूनिशुद्धिंविधायपूर्ववच्चतुर्दिक्षुशंकरादिदेवताभ्योबली
नर्घादियुक्तान्नमः क्रव्यादमुखेभ्योदेवेभ्यइतिमंत्रेणदद्यात् तान्विसृजेत्वल्यन्नमन्येभ्योदद्यात् अंभसिवाक्षि
पेत् ततश्चिताभूमेराच्छादनार्थंवृक्षःपुष्करकःपट्टकोवारोपयितव्यःपुष्करकःइष्टिकानिर्मितंदेवकुटकाकारंगृहम् त
तःसचैलोबंधुभिःसहस्नायात् अथकश्चित्सुतपौत्रसहोदरादिर्गंगातीरमस्थीनिनीत्वास्नात्वातान्यस्थीनिपंचगव्ये
नप्रोक्ष्यहिरण्यमध्वाज्यतिलैःसंयोज्यमृत्पिंडपुटेनिधायदक्षिणांदिशंपश्यन् ॐनमोस्तुधर्मायेतिवदन्जलं
प्रविश्यप्रेतोगतःस्वर्गकामोदक्षिणाभिमुखःसमेप्रीतइत्युक्त्वागंगांभसिनिक्षिपेत्ततःस्नात्वाउत्थायसूर्यंपश्येत्

ततः स्नात्वाचम्य ॐ अद्यकृतैतदस्थिप्रक्षेपप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहं
मुत्सृजे इति दक्षिणां दद्यात् एवं कृते प्रेतपुरस्थितस्य स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या यावदस्थि मनुष्यस्य गंगातोयेषु मज्ज
ति तावद्वर्षसहस्राणि स्वर्गलोके महीयते गंगातोयेषु यस्यास्थि प्लवते शुभकर्मणः न तस्य पुनरावृत्तिर्ब्रह्मलोकात्क
थंचन गौडाः दशाहाभ्यंतरे यस्य गंगातोयेस्थि मज्जति गंगायां मरणे यादृक् तादृक् फलमवाप्नुयात् ब्रह्मपुराणे
मातुः कुलं पितृकुलं वर्जयित्वा नराधमः अस्थीन्यन्यकुलोत्थानि नीत्वा चांद्रायणं चरेत् एवं च मातृकुलपितृकुला
न्यकुलोत्थस्याप्यस्थिनयने धर्मबुद्ध्या दोषाभावः अथाचाराग्निरग्नेरप्यस्थिपर्णनरदाहः दाह्यशरीरालाभे तद
स्थि घृतेनाभ्युक्ष्य वस्त्रेणाच्छाद्य दहेत् अस्थ्नामप्यलाभे षष्ट्यधिकपलाशपत्रशतत्रयेण पुरुषाकृतिं विन्यस्य ॐ
असौ स्वर्गाय लोकाय स्वाहेति दहेत् उदकधारां च दद्यात् तद्विन्यासप्रकारस्तु शिरस्यशीत्यर्द्धं दद्यात् ग्रीवायां तु
दशैव तु बाह्वोश्चैव शतं दद्यादंगुलीषु तथा दश उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा अष्टार्द्धं तु शिश्ने दद्यात् द्वादश
हं वृषणयोः ऊर्वोश्चैव शतं दद्यात्त्रिंशतं जानुजंघयोः पादांगुलीषु दश दद्यादेतत्प्रेतविकल्पनं अनाहिताग्नेर्देहस्तु द राम
ह्यो गृह्याग्निना द्विजैः तदलाभे पलाशोत्थैः पत्रैः कार्यः पुमानपि शतैस्त्रिभिस्तथा षष्ट्या शरत्रातैर्विधानतः वेष्टितव्यस्त ३४

थायत्वात् कृष्णसारस्य चर्मणः ऊर्णासूत्रेण बध्वाथ प्रलिप्तव्यस्तथा यवैः सुपिष्टैर्जलसंमिश्रैः प्रदग्धव्यस्तथाग्निनाऽसौ
स्वर्गाय लोकाय स्वाहेत्यृचाम्बवांधवैः एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् तुल्यन्यायतयाऽस्थिदाहे पित्रिरात्राशौ
चं एवं कृते भ्रांत्याय यागच्छेत्पुमान्क्वचित् कुर्यादयायुषीस्विष्टिं पुनराधाय पावकं साग्निरियमिष्टिः निरग्नेस्तु शांतिं
स्वस्त्ययनमन्यदिति अथाशौचांतदिने कृत्यं तत्राशौचांतपूर्वदिने सर्वेषां रजकद्वारा वस्त्रशुद्धिः कारयितव्या । आशौ
चांतदिवसे गृहशुद्धिं कृत्वा मृण्मयपाकभांडानि त्यक्त्वा स्नात्वा दशमं पिंडं दत्वा स्नात्वा बहिरुदकान्ते केशलोमनखान्
यथायोग्यं वापयित्वा तिलतैलेनाऽभ्यंगो रसर्षपकल्केन शिरः श्चोन्मज्ज्य स्नात्वा प्रेतस्पृष्टवासांसि तेभ्यः स्वाश्रितेभ्यो
दत्वाऽऽचम्य वाग्यतो वासोयुगमहतं नवं शुद्धं पुरातनं वा युक्तमव्रणं परिधायाऽश्मा विशेषगां सुवर्णं गोरोचनं दधि दू
र्वां सितसर्षपं ब्राह्मणोऽग्निं क्षत्रियो वाहनायुधं वैश्यः प्रतोदप्रग्रहौ शूद्रो यष्टिं संस्पृश्य मंगलानि संकीर्त्य ब्राह्मणान्स्व
स्तिवाचयित्वा गृहं प्रविशेत् अत्र दिने ब्राह्मणाः पंचगव्यपानं कुर्वंतीति सतामाचारः ॥ इति श्राद्धविवेके प्रथमक्रियाप
रिच्छेदो द्वितीयः ॥ अथैकादशाहश्राद्धार्थं निमंत्रणादिः तत्रादौ आशौचांतदिने निरामिषमेकवारं भुक्त्वा रात्रौ सर्वभु
क्तजने गृहे विप्रनिवेशनं गोमयोपलिप्तदक्षिणाप्रवणभूमौ ब्राह्मणमुदङ्मुखमुपवेश्य कृतापसव्यो दक्षिणाभिमुखः

ञ्जितवामजानुः ॐ गतोसि दिव्यलोकं त्वं कृतांतविहितात्पथः मनसा वायुभूतेन विप्रे त्वाहं नियोजये पूजयिष्यामि भोगेन
त्वितिप्रेतोद्देशेन पठित्वा पुष्पचंदनतांबूलानि ब्राह्मणाय दत्वा ब्राह्मणदक्षिणजानुस्पृष्ट्वा ओ अस्यां रात्रौ अमुकगोत्रस्य
पितुरमुकप्रेतस्याद्यश्राद्धकरणाय भवंतं ब्राह्मणमहमामंत्रयेइत्यामंत्रयेत् ॐ आमंत्रितोस्मीति प्रतिवचने ब्राह्मणोभ
क्तेॐ अक्रोधनेन शौचपरेणास ततं ब्रह्मवादिना भवितव्यं भवता च मयाच श्राद्धकारिणा सर्वायासविनिर्मुक्तेन काम
क्रोधविवर्ज्जितेन भवितव्यं भवता च स्वस्तने श्राद्धकर्मणि इति ब्राह्मणमुद्दिश्य पठेत् यद्यविघ्नेन रजनी यास्यति तदा सर्वं
मतत्करिष्यामीति तेनोक्ते ॐ इदं ते पाद्यमिति पाद्यं दत्वा द्विजं नमस्कृत्य प्रेतमुद्दिश्य तिलतैलेनाजानुविप्रपादौ प्रक्षाल
येत् अत्र स्त्रिया अभ्युद्देश्यत्वे ॐ गतासीत्यविकृतमेव पठनीयं आत्मतत्त्वानोद्देश्यत्वात् अथैकादशाहकृत्यं वहिर्नदीतीरे
गंदो प्रातः श्वेतवस्त्रयुगलेन स्नात्वा सूर्योदये ब्राह्मणस्य श्मश्रुकर्मनखच्छेदनं च कारयित्वा ताम्रपात्रेण तैलोद्वर्त्तनेन स्नानोथ
न.स्रांचदद्यात् स्वयं स्नात्वा कृतनित्यक्रियो नदीतीरे गृहे वा श्राद्धभूमिं परिकल्प्य पंचगव्येनोपलिप्य ज्वलदङ्गारैः संशोध्य
गौरमृत्तिकयाच्छाद्य तिलैः सर्षपैश्च विकिरेत् गोमयोपलिप्ते चान्नपाकस्थाने तिलान्विकीर्य परितः छागान्बंधयित्वा तत्र
सपिराडद्वारा स्वयं वान्नूतनमृन्मयभाराडेः पाकमारभेत् तन्नावांतः पूर्वाभिमुख उदङ्मुखो वा शष्पं दद्यात् तत्रजों सोपकस्था

शय्यायै नमः ॐ ब्राह्मणाय नमः इति देयब्राह्मणं त्रिः संपूज्य इमां सोपकरणां शय्यां ददानीति द्विजकरे जलदानं वारिणा
शय्याभिषेचनं च ॐ ददस्वेति प्रतिवचनम् ततः कुशत्रयतिलजलान्यादाय ॐ अद्याशौचांतद्वितीयेन्हि अमुकगोत्र
स्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इमां सोपकरणां शय्यां विष्णुदेवतां अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्य
महं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं ततः कुशत्रयतिलजलानि दक्षिणाद्रव्यं चादाय ॐ अद्य कृतैतत्सो
पकरणशय्यादानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रद
दे इति दद्यात् ततः प्रतिगृहीता ॐ स्वस्तीति प्रतिवचनमुक्त्वा सोपकरणां शय्यां संस्पृशेत् तत आचम्य ॐ फलवस्त्र
समन्वितकांचनपुरुषाय नमः ॐ ब्राह्मणाय नमः इति देयब्राह्मणं त्रिः संपूज्य ॐ इमं फलवस्त्रसमन्वितकांचनपुरु
षं ददानीति द्विजकरे जलदानम् वारिणा देयद्रव्यसेचनं कुशत्रयादीन्यादाय ॐ अद्याशौचांतद्वितीयेन्हि अमुक
गोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकाम इदं फलवस्त्रसमन्वितं कांचनपुरुषं विष्णुदेवतममुकगोत्रायामुकशर्मणे
ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं ततो दक्षिणाद्रव्यमादाय ॐ अद्य कृतैतत्फलवस्त्रसम
न्वितकांचनपुरुषदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रद

आ॰नि॰ दत्ततः प्रतिगृहीताओंस्वस्तीत्युक्त्वाकांचनपुरुषंस्पृशेत् तत आचम्य कुशत्रयतिलजलान्यादाय ओं अद्याशौचांतद्वितीये
३६ ऽन्हि अमुकगोत्रस्यपितुरमुकप्रेतस्यस्वर्गप्राप्तिकामोद्विजदंपती पूजनमहंकरिष्यइतिसंकल्प्यद्विजदंपती पूजयेत् तत्रक्र
मः राघोऽर्घ ओंद्विजदंपतिभ्यांनमः इदमनुलेपनं ओंद्विजदम्पतिभ्यांनमइत्युभयोः पादयोस्त्रिः पूजांकुर्यात् ततः पुष्पज
लाभ्यामेतानिधूपदीपतांबूलनैवेद्यसिंदूरविभूषणवासांसिद्विजदंपतिभ्यांनमइतिदद्यात् तौनमस्कुर्य्यात् एतच्च
द्विजदंपतिपूजनेप्रधानत्वात् वृषोत्सर्गाकरणेपिकर्त्तव्यंशय्यादानवदिति अथवृषोत्सर्गप्रयोगः तत्रवृषोत्सर्गसं
भृतिंविविक्तंनिर्ज्जनवनगोमध्येप्रागुदक्प्रवणंदेशंनयेत्ततआचांतः पूर्वाभिमुखउपविश्यकुशत्रयतिलजला
न्यादाय ओं अद्याशौचांतद्वितीयेन्हि अमुकगोत्रस्यपितुरमुकप्रेतस्यमोक्षकामः सोपकरणवत्सतरीचतुष्टयसहित
वृषोत्सर्गमहंकरिष्यइतिसंकल्प्य कुर्यात् नीलवृषप्राप्तौनीलपदप्रक्षेपः कर्त्तव्यः कार्त्तिक्यांवृषोत्सर्गे ओंअद्यका
र्त्तिक्यांतिथौ अमुकगोत्रस्यपितुरमुकशर्मणे मोक्षकामः सोपकरणवत्सतरीचतुष्टयसहितवृषोत्सर्गमहंकरिष्ये
इतिसंकल्पेविशेषः वत्सतर्य्यष्टकपक्षेचतुष्टयपदस्थानेऽष्टकपदप्रक्षेपः ततउत्तराभिमुखं ब्राह्मणमुपवेश्य ओंअ
द्यामुकगोत्रस्यपितुरमुकप्रेतस्यकर्त्तव्यवृषोत्सर्गाङ्ग भूतहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्त्तुममुकगोत्र

ममुकशर्माणांब्राह्मणांमेभिः पुष्पचंदनतांबूलवस्त्रयुगहेमालंकरणौर्ब्रह्मत्वेनत्वामहंवृणो इतिब्राह्मणंवृणुयात् ओंवृ
तोस्मीतिप्रतिवचनम् ओं यथाविहितंकर्मकुरुइतियजमानस्तमुद्दिश्यवदेत् ओंकरवाणीतितत्प्रतिवचनंनतत ओं अ
द्यामुकगोत्रस्यपितुरमुकप्रेतस्यकर्तव्यवृषोत्सर्गांगभूतहोमकर्मकर्तुममुकशर्माणांब्राह्मणामेभिः पुष्पचंदनतांबू
लहेमालंकरणावासोभिर्होतृत्वेनत्वामहंवृणोइत्याचार्यंवृणुयात् ओंवृतोस्मीतिप्रतिवचनं ओं यथाविहितंकर्मकुरु
इतियजमानस्तमुद्दिश्यवदेत् ओंकरवाणीतितत्प्रतिवचनम् ततोहोताआचांतोगोमयोपलिप्तवेदिकायांप्राङ्मुख
उपविश्यपुरतःकुशैर्हस्तमात्रंचतुरस्रंस्थंडिलंपरिसमुह्यकुशानैशान्यांक्षिप्त्वागोमयोदकेनोपलिप्यमध्येप्रादेश
मात्रमुत्तरक्रमेणस्रुवमूलेनत्रिरुल्लिख्यउल्लेखनक्रमेणादक्षिणांगुष्ठानामिकाभ्यांसंगताग्राभ्यांमृद मुद्धृत्यऐशा
न्यांतत्क्षिप्त्वातंदेशंजलेनाभ्युक्ष्य तत्रदक्षिणहस्तस्थंकांस्येनतूष्णीमग्निंस्थापयेत् अग्नेर्दक्षिणतः परिस्तरणाभूमि
मतिक्रम्यशुद्धमासनमुपकल्प्यतत्रप्रागग्रकुशैः परास्तरणंविधायवह्मारणामग्नेर्वायव्याः प्रदक्षिणमानीयकल्पिता
सनेबर्हिर्हस्तमुदङ्मुखमुपवेशयेत् ततोऽग्नेरुत्तरतःस्तरणाभूमिमतिक्रम्यकुशात्रयमास्तीर्यतत्रसांतरालंकृत्वापा
त्रस्थंबर्हिषाच्छादितंसर्वंकार्यार्थंमुदकंक्षीरंचब्रह्ममुखमवक्त्रेणाभ्यक्ष्यनिदध्यात् ततउपमूलबर्हिषांमुष्टिचतुर्थभागेनाग्ने

[illegible]तं प्राच्याम् ब्रह्मणोग्निपर्यन्तं दक्षिणस्याम् नैर्ऋताद्वायव्यंतं पश्चिमायाम् अग्नितः प्रणीतापर्यन्तमुत्तरस्यां स्तरणं
[illegible]न्तत आसादनमुपयोक्ष्यमाणानामग्नेरुत्तरतः प्रणीतापश्चिमे प्राक्संस्थमुदक्संस्थं वा तद्यथा पवित्रच्छेदनार्थं कु
[illegible] पवित्रार्थमनन्तर्गर्भिणं साग्रंकुशपत्रद्वयम् प्रोक्षण्यर्थं मृत्पात्रम् आज्यार्थं ताम्रस्थाली पायसचर्वर्थं मृत्तिकास्था
[illegible]संमार्जनार्थं कुशत्रयम् उपयहार्थं वेणीरूपकुशत्रयं प्रादेशमितपलाशसमित्त्रयम् स्रुव आज्यं तण्डुलं दु
[illegible]मासाघृतदुत्तरतः पोल्लसिद्धमेव पिष्टमयं वरं ब्रह्मदक्षिणार्थं पूर्णपात्रं होतृदक्षिणार्थं वस्त्रयुग्मे सुवर्णकं
[illegible]कल्पयेत् ततोग्राग्यत आसादितकुशपत्रद्वयमादाय पवित्रच्छेदनकुशैः प्रादेशमात्रं प्रमाप्य छिंद्यात् तो
[illegible] पवित्राभ्यां प्रणीतोदकमुत्पूय सपवित्रः करेण प्रणीतोदकं त्रिः प्रोक्षण्यां निधाय उदगग्रपवित्रेण्यस्तहस्त
[illegible]ष्ठानामिकाग्राभ्यामनयोरादाय तन्मध्येन प्रोक्षण्युदकं भूमौ त्रिः क्षिप्त्वा पवित्रे प्रोक्षण्यां निधाय तत्पात्रं दक्षि
[illegible]वामे निधाय दक्षिणहस्तानामिकांगुष्ठाभ्यां तज्जलं किंचिदूर्ध्वमुत्क्षिप्य प्रणीताजलेन प्रोक्षणीरभिषि
च्यतज्जलेन यथासादितं द्रव्यं प्रत्येकं सकृत्प्रोक्ष्य पवित्रशेषजलसहितपात्रं प्रणीताग्न्योरन्तरे निधाय आज्यस्था राम
ल्यामाज्यं निरूप्य चरुस्थाल्यां तण्डुलान्निःक्षिप्य प्रणीतोदकेन तांस्त्रिः प्रक्षाल्य तत्र प्रणीतोदकं दुग्धं च प्रक्षिप्य ३७

स्रुवं स्रुच ब्रह्मणा चाज्यं गृहीत्वा प्रदक्षिणीकृत्याग्निपूर्वेणानीत्वा दक्षिणत आज्यमनन्तरतः पायसं चरुं श्रपणार्थं युगपद
ग्नौ निधाय उल्मुकं सह विष्काग्नेः प्रदक्षिणं भ्रामयित्वा तत्रैव क्षिप्त्वा स्रुवस्य प्रागग्रस्याबाह्यमुखस्याग्नौ प्रतपनमुत
नस्य संमार्ज्जनकुशैराभ्यंतरतो प्रान्मूलपर्यन्तं मध्येर्मध्यत एव मूलैर्बाह्यतो मूलादग्रपर्यंतं संमार्ज्जनं प्रणीताद्भिर
भ्युक्षणं पुनः प्रतपनं न्यास्तरत बर्हिषि स्रुवपुरतः प्रागग्रस्य स्थापनं विधाय ततः पाके शृते स्रुवमाज्यमुद्वास्याग्निपश्चि
मेन नीत्वा प्रणीतोत्तरतः चोद्वास्याज्यं पश्चिमेन नीत्वा आज्यस्योत्तरतो निधाय स्रुवपुरतः स्रुवोत्तरे आज्यं तदुत्तरतः च
रुं निधाय प्रोक्षणीतः पवित्रे समानीय आज्ये प्रोक्षणीवदुत्पवनं पवित्रे प्रोक्षण्यां निधाय आज्यमवेक्ष्य सत्सपद्मे
तान्निरस्य प्रोक्षणापुत्पवनं विधाय पायसचरोरुत्तरतः पूर्वसिद्ध पिष्टक चरुं निधाय होमसमाप्तिपर्यंतमुपग्रहार्थं
कुशैर्वामहस्ते उपग्रहं विधाय प्रजापतिं मनसा चिंतयन्नुतिष्ठन् प्रागग्रघृताक्तसमिन्त्रयं वह्नौ प्रक्षिप्योपविश्य
प्रोक्षणायद्भिः सह विष्कमग्निं प्रणीताब्रह्मसहितं पर्युक्ष्य पवित्रे प्रणीतासु निधाय प्रोक्षणीपात्रं स्वस्थाने निदध्यात्
ततो ब्रह्मणाकर बर्हिषान्वारब्धो दक्षिणजानुनामयित्वा संस्रवं विनैवाज्येन जुहुयात् स्वाहांतो होमः इदमग्नये इति त्या
गः ॐ इह रतिः स्वाहा इदमग्नये १ ॐ इह रमध्वꣳ स्वाहा इदमग्नये २ ॐ इह धृतिः स्वाहा इदमग्नये ३ ॐ इह स्वधृतिः

स्था· स्वाहाः इदमग्नये ४ ओं उपस्रजंधरुणंमात्रेधरुणोमातरंधयन्स्वाहा· इदमग्नये ५ ओं रायस्पोषमस्मासुदीधरत्स्वाहा·
३: इदमग्नये ६ ततः प्राक् ऋजु अग्नेर्दक्षिणभागे मनसा ओं प्रजापतये स्वाहा इदं प्रजापतये १ अग्नेरुत्तरभागे ऋजु
प्राक् ओं इन्द्राय स्वाहा इदमिंद्राय २ तत उत्तरपूर्वार्द्धे ओं अग्नये स्वाहा इदमग्नये १ दक्षिणपूर्वार्द्धे ओं सोमाय स्वाहा
इदं सोमाय २ इत्याघारावाज्यभागौ च ससंस्रवं हुत्वा पायसं पेष्टकमेकं चादाय समिद्धतमेऽग्नौ संस्रवं विनैव पाय
सं जुहुयात् ओं अग्नये स्वाहा· इदमग्नये १ ओं रुद्राय स्वाहा इदं रुद्राय २ ओं शर्वाय स्वाहा इदं शर्वाय ३ ओं पशुप
तये स्वाहा इदं पशुपतये ४ ओं उग्राय स्वाहा इदमुग्राय ५ ओं उशनसे स्वाहा इदमुशनसे ६ ओं भवाय स्वाहा इदं
भवाय ७ ओं महादेवाय स्वाहाः इदं महादेवाय ८ ओं ईशानाय स्वाहा इदमीशानाय ९ इति हुत्वा पिष्टकेन ओं पू
षागाऽ अन्वेतु नः पूषा रक्षत्वर्वतः पूषा वाजं सनोतु नः स्वाहा· इदं पूष्णे १ ततः पायसपिष्टकाभ्यामुत्तरार्द्धावदानभू
ताभ्यां ओं अग्नये स्विष्टकृते स्वाहा· इदमग्नये स्विष्टकृते अग्नेर्मध्यभागे ततः आज्येन ओं भूः स्वाहा इदं भूः १ ओं भुवः स्वा
हा इदं भुवः ओं स्वः स्वाहा इदं स्वः ३ ओं त्वन्नोऽग्नेवरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः यजिष्ठो वह्नितमः शो राम·
शुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा· इदमग्नीवरुणाभ्याम् ४ ओं स त्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽ ३८

ऽस्याः उषसोव्युष्टौअवयक्ष्वणोवरुणं रराणोवीहिमृडीकं ँ सुहवोनः एधि स्वाहाइदमग्नीवरुणाभ्याम् ५ ओंअ
याश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्त्वमयाअसि अयानोयज्ञं वहास्ययानोधेहिभेषजं ँ स्वाहा इदमग्नये ६ ओं
येतेशतं वरुणायेसहस्रंयज्ञियाः पाशावितता महान्तः तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतः
स्वर्काः स्वाहाइदं वरुणायसवित्रेविष्णवेविश्वेभ्योमरुद्भ्यः स्वर्केभ्यः ओंउदुत्तमंवरुणपाशमस्मदवाधमं
विमध्यमं ँ श्रथाय अथावयमादित्यव्रतेतवानागसो अदितयेस्यामस्वाहाइदंवरुणाय ८ ओं प्रजापतये
स्वाहाइदंप्रजापतये ९ इतिमनसाएवंहुत्वा संस्रवप्राशनमाचमनंचकृत्वा पवित्राभ्यांशिरः प्रभृतिसंमार्जे
नं ओंसुमित्रियानआपः ओषधयः सन्त्वितिमन्त्रेण ततः ओंदुर्मित्रीयास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्वि
ष्मइतिमन्त्रेणप्रणीतोदकमैशान्यांनिनयेत् ततः फलपुष्पान्वितघृतेनओंमूर्द्धानंदिवोः अरतिम्पृथिव्यावैश्वा
नरमृतआजातमग्निंकविं ँ सम्राजमतिथिंजनानामासन्नापात्रंजनयन्तदेवाः स्वाहाइदमग्नये इतिय
जमानसहितःहोतापूर्णाहुतिंकुर्यात् ततः स्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिधार्य ओंदेवागातुविदोगातुमित
मनसस्पतइमंदेवयज्ञं ँ स्वाहावातेधाः स्वाहाइदमग्नये इतिबर्हिर्होमंहस्तेनैवकुर्यात् ततोयजमानः कुश

प्रा॰
अथतिलजलान्यादाय ॐ अद्यकर्त्तव्यवृषोत्सर्गांगभूतकृतैतद्धोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रतिष्ठार्थमि
३९ दंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणेदक्षिणांतुभ्यमहंसंप्रददेइतिब्रह्मणेदक्षिणां
दद्यात् ॐस्वस्तीतिप्रतिवचनम् यजमानेनतस्यपरितोषार्थंकिंचिद्देयं तन्मम ततोवस्त्रयुगमसुवर्णकांस्यान्युपनीयकु
शादीन्यादाय ॐअद्यकर्त्तव्यवृषोत्सर्गाङ्गभूतकृतैतद्धोमप्रतिष्ठार्थमेतानिवस्त्रयुगमसुवर्णकांस्यानिबृहस्पति
वह्निचन्द्रदैवतानि अमुकगोत्रायामुकशर्मणेब्राह्मणायहोत्रेदक्षिणांतुभ्यमहंसंप्रददेइतिहोत्रेदक्षिणांद
द्यात् ॐस्वस्तीतिप्रतिवचनम् ततोरुद्राध्यायंजपित्वाकर्मकारमाहूयवृषमंकयेतेनृयात् सचाग्निमयादक्षि
णपार्श्वेचक्रेणपश्चिमपादवामपार्श्वेत्रिशूलेनवृषभमंकयेत् ततोवत्सरीचतुष्टयसहितंवृषभंकुशजलेनस्ना
पयेत् तत्रस्नानकरणमंत्राः ॐहिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विन्द्रः याऽअग्निंगर्भंदधि
रेसुवर्णास्तानऽआपःशंस्योनाभवन्तु ॐयासांराजावरुणोयातिमध्येसत्यानृतेऽअवपश्यन्जनानाम् याऽ
अग्निंगर्भंदधिरेसुवर्णास्तानऽआपःशंस्योनाभवन्तु ॐयासांदेवादिविकृण्वन्तिभक्ष्यंयाऽअन्तरिक्षेवहुधा सम॰
भवन्तियाअग्निंगर्भंदधिरेसुवर्णास्तानऽआपःशंस्योनाभवन्तु ॐशिवेनमाचक्षुषापश्यतापःशिवयातन्वोपस्पृ ३९

ग्नातत्वं मे घृतश्च्युतः शुचयो पावकास्तानऽ आपः सर्वे स्योनाभवन्तु ॐ शन्नोदेवीरभिष्टयऽ आपोभवंतु पीतये शंयो
रभिस्रवन्तु नः ततो लोहघंटिकानूपुरकनकपट्टिकादिभिः पंचाप्यलंकृत्य सावित्रीमघमर्षणं रुद्राध्यायं पुरुषसू
क्तं ॐ यद्देवादेवहेडनं देवासश्चकृमा वयं अग्निर्मा तस्मादेनसो विश्वान् मुंचंत्वं हसः यदि दिवा यदि नक्तमेनांसि
सिचकमा वय वायुर्मा तस्मादेनसो विश्वान्मुचस्त्वं हसः यदि जाग्रद्यदि स्वप्नमेनांसि चकमा वयं सूर्योमा तस्मा
देनसो विश्वान् मुचत्वं हसः इत्यादिसूक्तत्रयं कूष्माण्डीश्च जपेत् ततो वृषभस्य दक्षिणकर्णे ॐ पिता वत्सानां
पतिरघ्न्यानामथो पिता महतां गर्गराणां वत्सो जरायुः प्रतिधुक्पीयूषऽ आमिक्षा घृतं तद्वस्य रेतः ॐ वृषोसि भगवान्
धर्मश्चतुष्पादः प्रकीर्तितः वृणोमि त्वामहं भक्त्या स मां रक्षतु सर्वतः इति मंत्रद्वयं जपित्वा कुशत्रयतिलजलान्यादा
य ॐ अद्याश्वो वा तद्वितीयेह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य मोक्षकामो रुद्रदैवतं वृषमेनं युवानं पतिं वो ददानि ते
न क्रीडंतीश्चरथ प्रियेण मा नः साप्त जनुषा सुभगा रायस्पोषेण समिषा मदेमेत्युत्सृजेत् लोहितो यस्तु वर्णेन पुच्छा
ग्रेण तु पांडुरः श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते नीलवृषे नीलपदप्रक्षेपः कार्त्तिक्यां वृषोत्सर्गे वृषोत्सर्गनि
मित्तकमाभ्युदयिकं कृत्वा ॐ अद्य कार्त्तिक्यां वृषमुत्सृज्य मारोहमिमान यूपान् विष्णुदैवतान् अमुकगोत्राया अमुक

श्रा·वि· दार्भ्यगोत्राय ब्राह्मणाय तुभ्यमहं संप्रददे इति अपूपत्रयं ब्राह्मणाय दद्यात् दक्षिणां च दद्यात् ॐ अघकार्त्तिक्याम पूपान्दत्वा
४० अमुकगोत्रस्य पितुरमुकप्रेतस्य मोक्षकामो रुद्रदैवतं वृषमेनं युवानं पतिं वो ददानि तेन क्रीडन्तीश्चरथ प्रियेण मानः श्री
स्म जनुषा सुभगा रायस्पोषेण समिषा मदेमेति वाक्यं कर्त्तव्यम् एतयैवोत्सृजेरन्निति पारस्कर वचनात् अनयैवक्रम
श्चोत्सर्गः अर्थस्तु हे वत्सतर्य्यो वो युष्माकमेनं पतिं स्वामिनं युवानं तरुणं ददानि त्यजानि तेनैतेन वृषेण प्रियेण स
ह क्रीडन्तीः खेलन्त्यश्चरथ भ्रमथ यूयमपि हे वत्सतर्य्यो मातरः नोस्माकं मानास्मत्सत्व विषयाः किं तु मयान्यक्तोः
त्वयं वृषस्य भवतीनां त्यागेन रायस्पोषेण धनसमृद्ध्या साप्तजनुषा सप्तजन्मव्यापकेन इषा अन्नेन संमदेमत्तुष्टाभ
वेम सुभगाः लोकस्य प्रियाः इति ऐशान्यां दिशि पंचापि चालयेत् पंचापि पूजयेत् एषोर्घः ॐ सोपकरणवत्सतरी
चतुष्टयसहिताय वृषाय नमः इदमनुलेपनं सोपकरणवत्सरी चतुष्टयसहित वृषायनमः पुष्पैः पूजयेत् एता
नि धूपदीपताम्बूलनैवेद्यानि ॐ सोपकरणवत्सतरी चतुष्टयसहित वृषाय नमः ततो वत्सतरी चतुष्टयमध्यगतं वृषभ राम
मभिमन्त्रयेत् तत्र मंत्राः ॐ मयोभूरभि मावाहि स्वाहा मारुतोसि मरुतां गणाः शम्भुर्मयोभूरभिमावाहि स्वाहा वस्य ४०
रसि द्रुवस्वान्शम्भुर्मयोभूरभिमावाहि स्वाहा ॐ पार्थ्योऽस्यग्नेः सूर्य्यं रुचो दिवमातन्वन्ति रश्मिभिः ताभिर्नोऽस्य

यसर्व्वाभीरुचेजनावनस्तं धियावोदेवाः सूर्य्योरुचोगीष्वश्वेषुपारुवः इन्द्राग्नीताभिः सर्वाभीरुचन्नोधत्तबृहस्पतेरुच
न्नोधेहिब्राह्मणेषुरुचंऽ राजसुनस्कृधिरुचंविश्वेषुमूद्रेषुमपि धेहिस्त्वारुचंतत्त्वायामिब्रह्मणावन्दमानस्तदाशा
स्तेयजमानोहविर्भिः अहेडमानोवरुणेहवोध्युरुशंसमानऽआयुःप्रमोषीःस्वर्णांधर्म्मस्वाहास्वर्णाक्र्कःस्वा
हास्वर्णाशुक्रःस्वाहास्वर्णांज्योतिःस्वाहा स्वर्णासूर्य्यःस्वाहाततःकृतापसव्योदक्षिणामुखोवामजानुपातयि
त्वायवतिलत्रषपुच्छमोटकान्यादायताम्रपात्रादिनामंत्रस्यफलमुद्दिश्यांजलित्रयेणतर्प्पयेदनेनमंत्रेणऊँ
स्वधापितृभ्योमातृभ्योवन्धुभ्यश्चापितृप्तयेमातृपक्षाश्चयेकेचिद्येचान्येपितृपक्षजाःगुरुश्वशुरवंधूनांयेकुले
षुसमुद्भवाः येप्रेतभावमापन्नायेचान्येश्राद्धवर्जिताः वृषोत्सर्गेणतेसर्वेलभंतांप्रीतिमुत्तमामिति ततःकर्म्मका
रमाहूयाभिमतवेतनंतस्मैदद्यात् उत्सृष्टब्राह्मणान् श्रावयेत् यत्किंचिद्द्विजनेमपोत्सृष्टंतदन्योननयेत् नवा
ह्यंनचैतत्क्षीरंपातव्यंकेनकिंचित्कचित् ततोरुद्रापिवद्भुसर्प्पिष्कपायसंब्राह्मणान्भोजयेत् अथकपिलादान
म् ऊँसोपकरणायैसवत्सकपिलायैनमः ऊँब्राह्मणायनमः इतिदेयद्रव्यब्राह्मणौत्रिःसंपूज्य ऊँइमांसोपक
रणांसवत्सांकपिलांगांददानीतिद्विजकरेजलदानंजलेनदेयद्रव्याभिषेचनम् कुशादीन्यादायऊँअद्येत्यादिगोत्रं

श्रा०वि तद्द्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामः इमां कपिलां गां हेमशृंगीं रौप्यखुरां वस्त्रयुगच्छन्नां कां
४१ स्योपदोहां मुक्तालांगूलभूषितां सवत्सां रुद्रदैवताममुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति द
द्यात् ॐ स्वस्तीति प्रतिवचनम् ततो दक्षिणाद्रव्यादिकमादाय ॐ अद्य कृतैतत्सोपकरणसवत्सकपिलगवीदा
नप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दक्षि
णां दद्यात् ततः प्रतिगृहीता ॐ स्वस्तीत्युक्त्वा गोपुच्छग्रहणम् यथाशाखं कामस्तुतिं च कुर्यात् तत्र कोदात्कस्मा
अदात्कामोदात्कामायादात् कामो दाता कामः प्रतिगृहीता कामैतत्तेइति यजुर्वेदे ॐ क इदं कस्माऽअदात्कामः
कामायादात् कामोदाता कामः प्रतिगृहीता कामस्समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्तेइति सामवे
दकामस्तुतिः यथोक्तकपिलालाभे केवलामपि दद्यात् तत्र पूजादि पूर्ववत् ॐ अद्याशौचांत द्वितीयेऽह्नि अमुक
गोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामः इमां कपिलां गां रुद्रदैवतां अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्य
महं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं ततो दक्षिणाद्रव्यादिकमादाय ॐ अद्य कृतैतत्कपिलगवीदान प्रति राम
ष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ॥ ४१

ओं स्वस्तीति प्रतिवचनं गोपुच्छग्रहणं कामस्तुतिश्च पूर्ववत् ततो महानद्यादौ सचेलं स्नात्वा तीर्थानि मनसा ध्यात्वा
तज्जलेनात्मानमभ्युक्षीन्नरेत्॥ अथैकादशाहश्राद्धप्रयोगः स च सुगतिसोपानानुसारेण लिख्यते तत्र मध्याह्ने
शुचिः कृताचांतः शुक्लद्विवासो गोमयोपलिप्तायामपसव्यवत् कृतगोमूत्रमंडलायां भूमौ मंडलाद्बहिः ओं भूम्येन
मः इति त्रिः पुष्पाक्षतपूजितायां भूमौ दर्भे प्रतिष्ठन् पात्रब्राह्मणं यजमानः सवर्णेनाहूतं स्नातमाचांतं ओं स्वाग
तमिति पृच्छेत् ओं सुस्वागतमिति तेनोक्ते उभावप्युपविशतः ततः श्राद्धकर्ता इदं ते पाद्यमिति पाद्यमुपनीय वि
नीतः सन् पुनः पुनरभिनंद्य पात्रब्राह्मणपादौ प्रक्षाल्यापसव्यादि कृत्वा जलतिलगंधपुष्पयुतमर्घपात्रमादाय
मोटकतिलजलानि चादाय ओं अद्यामुकगोत्र पितरमुकप्रेत आद्यश्राद्धे एष पाद्यार्घस्ते मया दीयते तवोपतिष्ठ
तामिति पाद्यार्घं दद्यात् ततः शिरसाऽभिवंद्य जानुविनिःश्राव्य ओं इदं ते आचमनीयमित्याचमनीयोदकं ब्राह्म
णाय दद्यात् ततः स्वयं पादौ प्रक्षाल्याचम्य पात्रब्राह्मणानुज्ञया गेहं कृत्वा श्राद्धदेशमागत्योपविश्य पात्राभिप्रायेण सि
द्धमिति पृच्छेत् पूर्वरात्रौ निमंत्रणासंभवे तस्मिन्नेवाह्नि श्राद्धवेलायां मंडपाद्बहिः शुचिः कृताचांतः शुक्लद्विवासा
गोमयोपलिप्तायां भूमौ अपसव्यवत् कृतगोमूत्रमंडलायां भूमौ मंडलाद्बहिः ओं भूम्येनमः इति त्रिः पुष्पाक्षतपूजि

श्रा०वि० तायांदर्भेषुतिष्ठन्स्नातमाचांतंब्राह्मणंयजमानस्ववर्णोनाहूतम् ॐस्वागतमितिपृच्छेत् ॐसुस्वागतमितितेनोक्ते उ
५२ भावप्युपविशतः ततः श्राद्धकर्त्ताइदंतेपाद्यमनुपनीयविनीतःसन्पुनःपुनरभिनंद्यपात्रब्राह्मणपादौप्रक्षाल्या
पसव्यादिकृत्वापुष्पचंदनतांबूलानिब्राह्मणायदत्वाब्राह्मणदक्षिणजानुस्पृष्ट्वा ॐअद्यामुकगोत्रस्यपितुरमु
कप्रेतस्याद्यश्राद्धकरणायभवंतंब्राह्मणमामंत्रये ॐआमंत्रितोस्मीति प्रतिवचनं अक्रोधनेनशौचपरेण
सततंब्रह्मवादिनाभवितव्यंभवताचमयाच श्राद्धकारिणासर्वायासविनिर्मुक्तेनकामक्रोधविवर्जितेनभवि
तव्यंभवतानोद्यतने श्राद्धकर्मणीतिब्राह्मणंनियमान् श्रावयेत्भवितव्यमितितेनोक्ते अर्घंपरिकल्प्यादाय
मोरकादिकंचादाय ॐअद्यामुकगोत्रपितरमुकप्रेतआद्य श्राद्धएषपादार्घस्तेमयादीयते तवोपतिष्ठताभि
तिपादार्घंदद्यात् ततःशिरसाभिवंद्यजानुनीश्राव्यस्य ॐइदंतेआचमनीयमित्याचमनीयजलंब्राह्मणायद
द्यात् ततःतिलतैलेनपात्रब्राह्मणपादावाजानुअभ्यजयेत् ततःस्वयंपादौप्रक्षाल्याचम्यब्राह्मणमग्रेकृत्वाश्रा
द्धदेशमागत्योपविश्यान्नाभिप्रायेणसिद्धमितिपृच्छेत् दक्षिणाग्रैककुशसहितेनेपालकंबलाद्याविकंब्राह्म राम०
णोपवेशनायासनमुपकल्प्यासनंस्पृशन् ॐअत्रासनेदेवराजाभ्यनुज्ञातोविश्रंस्यतांद्विजवर्य्यानुग्रहात् प्रसाद ४२

पेत्वासनं गृहाणपूतं त्त्वाग्निपूतेन करेण विप्र इति मंत्रं पठित्वा पात्रब्राह्मणं दक्षिणहस्तेन धृत्वोदङ्मुखमुपवेशयेत् त
तः पात्रस्य पादयोस्तले दक्षिणाग्रकुशत्रयं दद्यात् आसनसमीपे च तिलतैलेन घृतेन वा श्राद्धसमाप्तिपर्यन्तस्थायि
नं दीपं कुर्य्यात् तद्रक्षापात्रब्राह्मणेन कर्तव्यमारक्षोघ्नान् गौरसर्षपान् तिलांश्च श्राद्धदेशे सन्निधापयेत् काककुक्कु
रादीन् श्राद्धद्रष्टॄन् अपसारयेत् ततः पूर्वाभिमुखः कुशोदकेन ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा यः स्मरेत्
पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिरिति पठित्वा ॐ पुण्डरीकाक्षः पुनात्विति पुण्डरीकाक्षं संस्मृत्वा श्राद्धोपद्रव्याणि
स्थानं च सिंचेत् ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिकामोऽ
द्यारिपयाकाले षोडशश्राद्धान्यहं करिष्य इति संकल्पयेत् एकादशमासाभ्यन्तरेऽधिमासपाते षोडशपदस्था
ने सप्तदशपदं प्रयोज्यं ततः कुशत्रयतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतुषोड
शश्राद्धान्तर्गताद्यश्राद्धमहं करिष्य इति संकल्पयेत् ॐ कुरुष्वेति ब्राह्मणप्रतिवचनं ॐ गायत्रीजपमहं करिष्य इ
ति पृष्ट्वा कुरुष्वेति ब्राह्मणानुज्ञातः त्रिर्गायत्रीं जपेत् सप्तव्याहृतिकां सप्रणवां च जपनीया गायत्री देवताभ्यः पितृभ्यश्च
महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नम इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा दक्षिणाभिमुखः पाति

श्रा तवामजानुः मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्यश्राद्धे इदमासनं तेमयादीयते तवोपति
४२ ष्ठतामिति मोटकरूपमासनं तिलजलप्रोक्षितं दक्षिणाग्रमुत्सृजेत् ततः सव्यं कृत्वा प्राङ्मुख उपविष्टः ॐ छत्रा
यनमः ॐ ब्राह्मणायनमः इति देयब्राह्मणो त्रिः संपूज्य इदं छत्रं ददानीति द्विजकरे जलं दत्वा छत्रमभिषिच्य कुश
त्रय तिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्यावरणकाम इदं छत्रममुत्तानांगिरोदैवतममुकगो
त्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रतिवचनं ततस्तिलजलकुशान् दक्षि
णाद्रव्यं वादाय ॐ अद्यकृतैतच्छत्रदानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणा
य दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां दद्यात् ततः प्रतिगृहीता ॐ स्वस्तीत्युक्त्वा छत्रं दण्डे धारयेत् ॐ उपानभ्
ह्यां नमः ॐ ब्राह्मणायनमः इ तेदेयब्राह्मणो त्रिः संपूज्य ॐ इमे उपानहौ ददानीति द्विजकरे जलं दानं उपान
हावभिषिंच्य कुशादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य तप्तवालुकासिकंटकितभूदुर्गसंतरणकाम
इमे उपानहावुत्तानांगिरोदैवते अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॐ स्वस्तीति प्रति राम
वचनं ततः कुशादीन् दक्षिणाद्रव्यं वादाय ॐ अद्यकृतैतत् उपानद्दानप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतममुकगोत्रा ४२

यामुकशर्मणे ब्राह्मणाय दक्षिणाय दक्षिणांतुभ्यमहंसंप्रददे इति दक्षिणांदद्यात् ततः प्रतिगृहीता ॐस्वस्तीत्युक्ता उपानहावारो
हेत् ततोऽपसव्यंकृत्वा दक्षिणाभिमुखः पातितवामजानुः ॐ अपहताऽसुरारक्षाꣳसि वेदिषद इति श्राद्धदेशेवामाव
तेन तिलान्विकीर्य्य ॐआयन्तुनः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञे स्वधयामदन्तोधिब्रुव
न्तुतेवन्त्वस्मानितिजपेत् ततोर्घपात्रोपरि अनखच्छिन्नंदक्षिणाग्रंपवित्रंधृत्वा ॐशन्नोदेवीरभिष्टयऽआपोभवन्तुपी
तये शंयोरभिस्रवन्तुन इति मंत्रेणार्घपात्रेजलंदत्वा ॐतिलोसिसोमदेवत्योगोसवोदेवनिर्मितः प्रयत्नमद्भिः पृक्तः स्वधया
पितृल्लोंकान् प्रीणाहिनः स्वाहेतितिलान्प्रक्षिप्य गंधपुष्पेतूष्णींतत्रप्रक्षिप्य अर्घपात्रंवामहस्तेकृत्वा पवित्रंब्राह्मणहस्ते
उत्तराग्रंदत्वा तदुपरिकिंचिदुदकांतरंदत्वा ॐयादिव्याआपःपयसासंबभूवुर्याऽआन्तरिक्षाऽउतपार्थिवीर्याहिरण्यवर्णा
यज्ञियास्तानऽआपःशिवाःसꣳस्योनासुहवाभवन्तु इति पठित्वामोटकादीन्यादाय ॐअद्यामुकगोत्र पितरमुकप्रेत
आद्यश्राद्ध एषहस्तार्घस्तेमयादीयतेतवोपतिष्ठतामिति ब्राह्मणकरेपवित्रोपरि अर्घजलंदद्दुत्सृजेत् पात्रंचवामपा
र्श्वेपित्रेस्थानमसीत्यर्घपात्रंसपवित्रमधोमुखंस्थापयेत् तच्चदक्षिणादानपर्यन्तन्नचालयेत् ततः श्राद्धदेशेतिलान
विकीर्यदर्भहस्तोभूत्वाप्रेतमावाहयेत् तत्रमंत्रः इहलोकंपरित्यज्यगतोसिपरमांगतिमिति अत्रासौश्राद्धेपितो

श्रा॰वि॰ सोत्येवमेव पठनीयमात्मत्वेनोद्देश्यत्वात् ततोमोदकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेतआद्यश्राद्धएतानिगं
४४ धपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेमयादीयंतेतवोपतिष्ठन्तामितिगंधादीनुत्सृजेत् ततःसर्वसुगंधिरि
तिमंत्रेणगंधान् ॐ श्रियादेव्याइतिमंत्रेणपुष्पं ॐ वनस्पतिरसइतिमंत्रेणधूपंब्राह्मणायनिवेदयेत् ततॐ एष
दीपइतिनिवेदिते ॐ सुदीपः ब्राह्मणोवदेत् ॐ एतानितांबुलानीतिनिवेदिते ॐ सुतांबूलानीतिब्राह्मणोवदेत्
ॐ इमेयज्ञोपवीतेइतिनिवेदिते ॐ सुयज्ञोपवीतेइतिब्राह्मणोवदेत् ॐ एतानिवासांसीतिनिवेदिते ॐ सुवासां
सीतिब्राह्मणोवदेत्पुष्पाणिशिखायामेवद्विजेनधार्याणिततःप्रेतोपभुक्तशय्यासनादिकंगंधपुष्पैरभ्यर्च्य श्रा
द्धभोक्त्रेप्रतिपादयेत् ततोगोरमृत्तिकपानीवारचूर्णेनजलेनवाब्राह्मणांवेष्टयित्वाचतुरस्रंमंडलंकुर्यात् परकीयभू
मौश्राद्धकरणेश्राद्धीयवस्तुषुकिंचिदुद्धृत्यतिलघृतयुक्तमन्नं ॐ इदमन्नमेतद्भूस्वामिपितृभ्योनमइतिदद्यात् जीवतां
भूस्वामिनांकिंचिद्दाननिकरं दद्यात् ततउष्णमन्नंताम्रपात्रेणकराभ्यामादायमनाक्स्थित्वापितरंध्यात्वापुरुषतृप्ति
क्षमंपरिविष्यात् ततइदंमधुरमिदमस्तुष्णमित्यादिव्यंजनगुणानुकीर्तयन्मांसादीनिव्यंजनानिभूपिष्टपात्रांतरे राम॰
षुपरिविष्यघृतंसतिलजलंचोपनीय अन्नंमधुनाभिधारयेत् ॐ मधुवाताऽऋतायतेमधुक्षरंतिसिन्धवः माध्वीर्न्नः । ४४

स्त्वोषधीः ॐमधु नक्तमुतोषसो मधुमत्पार्थिवं रजः मधुद्यौरस्तु नः पिता ॐमधुमान्नो वनस्पतिर्मधुमाँ२॥ अस्तु
सूर्य्यः माध्वीर्गावो भवन्तु नः ॐमधुमधुमध्विति च पठित्वा व्यस्ताभ्यां पाणिभ्यां पात्रमालभ्य ॐपृथिवी ते पात्रं द्यौ
रपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि स्वाहा इति जपेत् ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् स
मूढमस्य पांसुरे इति पठन्नमृतरूपतया अन्नं विचिंत्य ॐकृष्ण कव्यमिदं रक्ष मदीयमिति पठित्वा ॐइदमन्नम् ॐइमा
आपः ॐइदमाज्यम् ॐइदं हविरिति पात्रं ब्राह्मणदक्षिणांगुष्ठमन्नजलघृतान्नेषु निवेश्य ॐअपहताऽसुरा र
क्षांसि वेदिषद इत्यन्नोपरि वहून् तिलान् प्रक्षिप्य मोटकादीन्यादाय वामेन पाणिना पात्रमत्यजन् ॐअद्यामुकगो
त्र पितरमुकप्रेत आद्यश्राद्ध इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ततो भवान् प्राशमयत्वि
ति ब्रूयात् विप्रायापोशानं दत्वा सप्रणवाः सव्याहृतिकां गायत्रीं ॐमधुवाता इत्यादि त्र्यृचम् ॐमधुमधुमध्विति च
जपित्वा ॐअन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्त्विति पठित्वा ॐयथासुखं जुषस्वेति ब्रा
ह्मणं ब्रूयात् ब्राह्मणश्च वामेन पाणिना पात्रमत्यजन् ॐकारपूर्वकं भुंजीत संज्ञयापि भक्ष्यप्रार्थनं न कुर्यात् श्राद्धकर्ता
दर्भेष्वासीनः सप्रणवव्याहृतिकां गायत्रीं मधुवाता इत्यादि त्र्यृचं मधुमधुमध्विति च जपेत् गायत्रीं ब्राह्मणं श्रावयित्वा

श्रा० ॐकृणुष्वपाजइत्यादीन रक्षोघ्नमंत्रान्पठित्वा भूमिंतिलैराकीर्य्यब्राह्मणंपितृरूपतया ध्यायेत् ततउदीरतामित्या
४५ दिपितृमंत्रान् ॐसहस्रशीर्षाइत्यादि पुरुषसूक्तम् ॐआशुःशिशानइत्यादिकमप्रतिरथमन्यान्यपि शातरुद्रि
यप्रभृति पवित्राणि रुचिस्तवप्रभृतीनिचपठेत् अंततः ॐनमस्तुभ्यंविरूपाक्षनमस्तेनेकचक्षुषे नमःपिनाकह
स्ताय वज्रहस्ताय वैनमइतिश्लोकमपिपठेत् वीणादिभिर्ब्राह्मणंहर्षयन् व्यंजनादिगुणान्कीर्तयन् तस्यपत्र
पत्रेव्यंजोपलभ्यते तत्तदुपनयन् मंदंमंदंभोजयेत् ततस्तंतृप्तंज्ञात्वा उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशात्रयां
भूमिंप्रोक्ष्यसर्वप्रकारकमन्नंतिलघृतसहितंजलेनाप्लाव्य गृहीत्वा ॐअनग्निदग्धायेजीवायेप्रदग्धाःकुलेमम
भूमौदत्तेनतृप्यंतुतृप्तायांतु परांगतिमितिमंत्रेणमंत्रस्यंफलमुद्दिश्यकुशोपरितदन्नंविकिरेत् ततःसव्यंकृत्वाच
म्यहरिंस्मृत्वा अपसव्यंकृत्वा दक्षिणाभिमुखोब्राह्मणायजलगंडूषमिदंतेपत्यापोशानमितिदत्वा ॐस्वदितमि
तिब्राह्मणंपृच्छेत् ॐसुस्वदितमितितेनोक्ते ॐपिंडमहंकरिष्येइतिपृच्छेत् कुरुष्वेतिब्राह्मणानुज्ञातःउच्छिष्टसन्नि
धौचतुरस्रंहस्तैकप्रमाणंदक्षिणप्रवणंचतुरंगुलोच्छ्रितंस्थानंनिर्माय तन्मध्येवामहस्तेनदर्भपिंजलीमादायपितृ
न्मूलेनवामान्वारब्धदक्षिणकरेणप्रादेशमात्रंलिखेत् ॐअपहताऽअसुरारक्षांसिवेदिषद इतिमंत्रेणारे राम०
४५

खामुल्लिखेत् दर्भपिंजुलीउत्तरस्यांदिशिनिक्षिपेत् तदुपरि येरूपाणिप्रतिमुंचमानाः असुराःसंतःस्वधयाचरंति परापु
रोनिपुरोयेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् इत्युल्मुकंभ्रामयित्वा रेखादक्षिणतःक्षिपेत् तदुपरि उपमूलसकृल्लू
नकुशान् दक्षिणाग्रानास्तीर्यसव्यंकृत्वा ॐ देवताभ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वापर्णपुटकादिकमेकंतिलजलगं
धपुष्पयुतंवामहस्तेकृत्वादक्षिणहस्तेमोटकादिकमादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्यश्राद्धे पिण्डस्था
नेऽत्रावनेनिंक्ष्वते मयादीयतेतवोपतिष्ठतामिति कुशोपरि अवनेजनंदद्यात् ततः श्राद्धशेषमन्नंसर्वव्यंजनतिलं
मधुघृतयुतमेकीकृत्य तेन विल्वपरिमाणपिण्डनिर्माय घृतमध्वभिघारितंकृत्वादक्षिणहस्तेनादायमोटकादींश्चा
दाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्यश्राद्ध एषपिण्डस्ते मयादीयतेतवोपतिष्ठतामिति कुशोपरि अवनेजन
स्थाने सव्योपगृहीतदक्षिणकरेणपिण्डंदद्यात् आस्तृतदर्भमूलेकरंप्रोक्ष्य सव्यंकृत्वाचम्यहरिंस्मृत्वा अपसव्यंकृ
त्वा ॐ अत्रपितर्मादयस्वयथाभागमावृषायस्वइतिपठित्वा वामावर्त्तेनोदङ्मुखीभूत्वामनाक्श्वासंनियम्यतेनैवव्य
पासुखंपर्यावर्त्तयन्पितरंभास्कररमूर्त्तिंध्यायन् अमीमदंतपितरोयथाभागमावृषायिषत इतिपठेत् अवनेजनाव
शिष्टजलयुतपात्रंवामहस्ते कृत्वादक्षिणहस्तेनमोटकादीन्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्यश्राद्धपि

श्रा एेऽऽत्रमत्सवने निक्ष्वतेमयादीयतेतवोपतिष्ठतामितिपिण्डोपरिप्रत्यवनेजनंदद्यात् ततोनीवीं विस्रंस्य सव्यं कृत्वाचम्य
४६ हरिस्मृत्वावामेनपाणिनाधृतं सूत्रं दक्षिणाहस्तेन गृहीत्वा ॐ एतन्नेपितरोवासइतिपिण्डोपरिधृत्वा मोदकादिकमा
दाय ॐ अद्यामुकगोत्रपितरमुकप्रेत आद्य श्राद्धपिण्डे एतद्वासस्तेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् तत
स्तूष्णीं पिण्डे गंधपुष्पधूपदीपतांबूलानिदद्यात् ततः पिण्डशेषान्नं पिण्डसमीपेविकिरेत् तत आचांतस्यब्राह्मणा
स्यकरे ॐ अपांमध्येस्थितादेवाः सर्वमप्सुप्रतिष्ठितं ब्राह्मणस्यकरेन्यस्ताः शिवाआपोभवंतुमेइतिजलंदद्यात् ॐ
भवंतुतेब्राह्मणस्यतत्प्रतिवचनम् लक्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसतिपुष्करे लक्ष्मीर्वसतिगोष्ठेषु सौमनस्यंसदास्तु
मेइतिपुष्पाणिदद्यात् ॐ अस्तुसदातवेतिप्रतिवचनम् अक्षतंचास्तुमेपुण्यंशांतिःपुष्टिर्धृतिश्चमे यद्यच्छ्रेयस्क
रंलोके तत्तदस्तुसदाममइतितंडुलानिदद्यात् ॐ अस्तुसदातवेतिप्रतिवचनं अथवा शिवाआपःसंत्वितिजलं सौ
मनस्यमस्त्वितिपुष्पम् ॐ अक्षतंचारिष्टमस्त्वितितंडुलान्दद्यात् ॐ संत्विति ॐ संत्विति ॐ अस्त्वितिचप्रतिवचनं त
तःपुटकादिपात्रेशांत्युदकंपरिकल्प्य मेदिनीं शिरसाभिवंद्यइमंमंत्रंपठेत् ॐ नमोनमोमेदिनिलोकधात्रि उर्विमहि शै राम
लगिरिधारिणि नमःधरणिकाश्यपिजगत्प्रतिष्ठे वसुधे नमोस्तु वैष्णविलोकधात्रिनमोस्तु तेसर्वरसप्रतिष्ठेनिवापना ४६

वीचिनमोस्तुते ततोमोदकादिकमादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यआद्यश्राद्धेदत्तैतदन्नपानादिकमुपतिष्ठता
मितिविप्रकरेअक्षय्योदकंदद्यात् ॐ उपतिष्ठतामितिप्रतिवचनम् ततः सव्यंकृत्वाप्राङ्मुखःकृतांजलिस्तन्मनाःसु
मनाश्चदक्षिणांदिशंपश्यन् ॐ अघोरःपितास्त्वितिपठेत् अत्रपूर्वाभिमुखोंपिण्डोपरिजलधारांददतीत्याचारः ॐ
गोत्रंनोवर्द्धतामितिवदेत् ॐ वर्द्धतामितिप्रतिवचनं ॐ दातारोनोभिवर्द्ध
न्तांवेदाःसंततिरेवचश्राद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्तु अन्नंचनोवहुभवेदतिथींश्चलभेमहियाचितारश्चनः
संतुमाचयाचिष्मकंचनएताःसत्याशिषःसंत्विति आशिषोब्राह्मणंयाचेत् ॐ संत्वितिब्राह्मणप्रतिवचनम् त
तोऽपसव्यंकृत्वासपवित्रकुशत्रयंपिण्डोपरिदक्षिणाग्रंधृत्वा ॐ नमोवाचयिष्यइतिपृच्छेत् ॐ वाच्यतामित्युक्ते
ॐ पित्रेनमःउच्यतामितिवदेत् ॐ अस्तुनमइतिवचनं ततःपुटकादिस्थितंजलंगृहीत्वा ॐ ऊर्जंवह
न्तीरमृतंघृतंपयःकीलालंपरिस्रुतम्स्वधास्थतर्पयतमेपितरमितिदक्षिणाग्रांजलधारांसपवित्रकुशोपरिद
द्यात् ततोनम्रीभूयपिण्डमाघ्रायोत्थापयेत् पिण्डाधारकुशानुल्मुकंचवह्नौक्षिपेत् ततोर्घपात्रमुत्तानीकृत्यमो
दकतिलजलान्यादायदक्षिणाद्रव्यंचादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यकृतैतदाद्यश्राद्धप्रतिष्ठार्थमि

श्रा० दरजतं चंद्रदैवतं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति दक्षिणादानं ॐ स्वस्तीति प्रतिवचन
४७ म् श्राद्धकर्त्ता पात्रब्राह्मणस्य चरणौ संवाह्य तं नमस्कुर्यात् ततो दक्षिणपाणिना पात्रब्राह्मण दक्षिणपाणिं गृहीत्वा शय्या
सनमंजनकंकतिकां चार्पयेत् ब्राह्मणश्चांजनकंकतिकां चादाय शय्यामाक्रम्य मुहूर्त्तं विश्रमेत् ततः सामवेदाध्या
यि ब्राह्मणास्ताम्रपात्रस्थं तिलोदकमुपाहरेयुः ततः श्राद्धकर्त्ता तेन जलेन गृहस्थितं द्रव्यमभिषिंचयेत् ततः सव्यं
विधाय ॐ अग्निमुखा देवास्तृप्यंतामिति यवयुतजलेन कुशैः कुशोपरि तर्प्पयेत् अवशिष्टमन्नं ॐ भूतेभ्य एष व
लिर्नम इति जलपुष्पाभ्यां वलिं दद्यात् ततः सामगब्राह्मणान्भोजनादिभिः संतोषयेत् ततोऽपसव्येन ॐ निरोंकारं
स्वस्ति ब्रूहीति ब्राह्मणाय वदेत् स्वस्तीति ब्राह्मणो ब्रूयात् स्वस्त्यस्तु इत्युक्त्वा ब्राह्मणमुत्थाप्य जलपात्रं गृहीत्वा निमं
त्रणस्थानस्थितं ब्राह्मणं ॐ आमावाजस्य प्रसवो जगम्या देवे द्यावापृथिवी विश्वरूपे आमागंतामपितरामातरो वामा
सोमोऽमृतत्वेन गम्यादिति पठन् प्रदक्षिणीकुर्वन् वारिधारया त्रिर्वेष्टयित्वा प्रणम्याष्टौ पादाननुव्रज्य प्रदक्षिणीकृ
त्याभिवादयेत् सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपित्वा गृहं प्रविशेत् ततः पाणिभ्यामपसव्येन श्राद्धीय दीपनिर्वापणं श्रा०
सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य ततः श्राद्धसंपूर्णकामः ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेवत ४७

द्विस्नोः संपूर्णास्यादिति श्रुतिरिति पठित्वा विलुस्मरणां कुर्यात् ततश्चाशौचान्त द्वितीयदिन एव यथाशक्ति महार्हाणि रत्ना
निगाः वाहनं यानानि दासीदासं मन्त्राति वेषमानि श्रेष्ठभूषणानि प्रेतहितमुद्दिश्य ब्राह्मणाय दद्यात् तद्यथा अद्याशौचान्त
द्वितीयेऽह्नि अमुकगोत्रस्य पितुरमुकप्रेतस्य स्वर्गप्राप्तिकामः इमां गां रुद्रदैवतां यथानामगोत्राय ब्राह्मणाय दातुमह
मुत्सृजे इति गां दद्यात् ॐ अद्यकृतैतद्गोदानप्रतिष्ठासिद्ध्यर्थं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षि
णां तुभ्यमहं संप्रददे इति यथाशक्ति दक्षिणां दद्यात् एवं भूमिहिरण्यादिदानमपि अस्मिन्दिने दशाप्रभृति श्रोत्रिय
न्भोजयेत् तान्परितोषयेत् तत्रदिने विहितमपि पंचगव्यपानं शिष्टानाचरंतीति इति न लिखितं अथान्नोदकुंभदानं
तत्र एकादशाह श्राद्धं कृत्वा आचम्य प्राङ्मुख उपविश्य कुशतिलजलान्यादाय ॐ पितृगताहरहरन्नोदकुंभोपस्थि
तिस्वर्गताश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामोऽद्यादि पितृमरणादिनावधिकाशौचावच्छिन्नदिनोनवत्स
रं पाय[illegible]अहं पित्रे सान्नोदकुंभदानमहं करिष्ये इति जलपूर्णकुंभमुपनीय संकल्पं कुर्यात् ततोऽपसव्यादि कृत्वामो
रकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत इदमासनं ते मया दीयते तवोपतिष्ठतामित्यासनमुत्सृज्य सघृत
व्यंजनमन्नमुपनीय ॐ अद्यामुकगोत्र पितरमुकप्रेत अयं सान्नोदकुंभस्ते मया दीयते तवोपतिष्ठतामित्युत्सृजेत् ।।

श्रा० तदुभयं पात्रब्राह्मणायप्रतिपादयेत् अशौचोपनिपाते प्ययंदातव्यइतिसपिंडनेकृतेवर्षाभ्यंतरेॐअद्यामुकगोत्र
४८ पितरमुकशर्मन्निदमासनंतुभ्यंस्वधाॐअद्यामुकगोत्रपितरमुकशर्मन्नयंसान्नोदकंभस्तुभ्यंस्वधेतिवाक्यंकुर्या
त्ततोमोदकादीन्यादायॐअद्यकृतैतत्सान्नोदकुंभदानप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणा
यदक्षिणांदातुमहमुत्सृजेइतिप्रत्यहंसान्नमुदककुंभंदत्वादक्षिणांदद्यात् अत्रद्वादशाहश्राद्धकार्यमितिकेचित्
तदपिएकादशाहवत् अथमासिकश्राद्धप्रयोग तत्रश्राद्धपूर्वदिनेएकभक्तादिकंविधायप्रातःश्वेतवस्त्रयुग्मेन
स्नात्वामध्यदिनेपुनःस्नात्वाकृतनित्यक्रियआचांतउपविष्टःपूर्वोपकल्पितेप्रज्वालितेप्रदीपंस्थापितगौरसर्षपति
लारक्षोघ्नंश्राद्धदेशमागत्यॐसिद्धमितिरक्षाकुशात्रयजलेन ॐअपवित्रःपवित्रोवासर्वावस्थांगतोपिवा यःस्म
रेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिःॐपुंडरीकाक्षःपुनात्वित्युच्चार्यश्राद्धदेयद्रव्याण्यात्मानंचप्रसिंचेत्ॐअद्यामु
कगोत्रस्यपितुरमुकप्रेतस्यप्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गतप्रथममासिकश्राद्धमहंकरिष्यइतिसंकल्पंकु
र्यात् एकादशमासाभ्यंतरेऽधिमासपातेषोडशापदस्थानेसप्तदशापदंप्रयोज्यं ततस्त्रिर्गायत्रीजपित्वाॐदेवताभ्यः एम०
पितृभ्यश्चमहायोगिभ्यएवचनमःस्वाहायैस्वधायैनित्यमेवनमोनमइतित्रिर्जपेत् ततोऽपसव्यादिकृत्वामोदकादि ४८

मादाय ओं अद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्ध इदमासनं ते मया दीयते तवोपतिष्ठतामित्यासनमुत्सृजेत्
ओं अपहताऽअसुरारक्षाꣳसि वेदिषद इति वामावर्तेन श्राद्धदेशे तिलान्विकिरेत् ततआयंतुनःपितर इति मंत्रं प
ठेत् ततः पुरकादौ पवित्रं दक्षिणाग्रं धृत्वा ओं शन्नोदेवीरिति मंत्रेण तत्र जलं क्षिपेत् ओं तिलोसि सोमदेवत्यो गो
सवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वधया पितॄंल्लोकान्प्रीणाहि नः स्वाहेति तिलान्प्रक्षिप्य तूष्णीं गंधपुष्पं च निः
क्षिपेत् ततस्तदर्घपात्रं वामहस्ते कृत्वा पवित्रमन्यपात्रोपरि उत्तराग्रं धृत्वा तदुपरि किंचिदुदकांतरं दत्वा ओं यादि
व्याऽआपः पयसा संबभूवुर्या आंतरिक्षाऽउत पार्थिवीर्याहिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः शꣳस्यो
नाः सुहवा भवन्तु इति पठित्वा दक्षिणहस्तेन मोटकादीन्यादाय ओं अद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्रा
द्ध एष हस्तार्घस्ते मया दीयते तवोपतिष्ठतामिति पवित्रोपरि जलं दद्यात् ततः पवित्रादिसहितमर्घपात्रमासन
वामपार्श्वे ओं पित्रे स्थानमसीति न्युब्जं कुर्यात् पुनर्मोटकादीन्यादाय ओं अद्यामुकगोत्रपितरमुकप्रेतप्रथममा
सिकश्राद्ध एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते मया दीयंते तवोपतिष्ठतामिति गंधादिकमुत्सृ
जेत् ततआसनस्य भोजनपात्रसहितस्य चतुर्दिक्षु चतुरस्रं मंडलं कृत्वा श्राद्धीयान्नाग्रभागं घृतव्यंजनतिलज

श्रा॰ लपुतंपुटकादौकृत्वा ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमइत्युत्सृजेत् ततस्ताम्रपात्रादिस्थितमन्नंहस्ताभ्यामा
४९ दायमनाकस्थित्वापितरं ध्यायन् भोजनपात्रेउपनयेत् पुरुषतृप्तिस्समममन्नंपरिविष्यभूपिष्टपात्रान्तरेपुत्र्यंज
नान्नुपकल्प्यपुटकस्थितंघृतंजलंचोपनीयअन्नोपरिहस्तद्वयगृहीतपात्रेणमधुदत्वाततः ॐमधुवाताइ
त्यादित्र्यृचं ॐमधुमधुमध्वितिचजपेत् ततोन्यस्तहस्ताभ्यामन्नपात्रमालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानंब्रा
ह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपांसु
रेकृत्स्नकव्यमिदंरक्षमदीयमितिपठित्वावामेनपाणिनापात्रमत्यजन् दक्षिणहस्तांगुष्ठमन्नजलघृतान्नेषु
ॐइदमन्नम् ॐइमाआपः ॐइदमाज्यम् ॐइदंहविरितिनिःक्षिप्य ॐअपहताऽअसुरारक्षांसिवेदि
षदइत्यन्नोपरितिलान्विकीर्य दक्षिणहस्तेनमोटकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासि
कश्राद्धइदमन्नंसोपकरणंतेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् ततोगायत्रीमधुवाताइत्यादित्र्यृचं ॐम
धुमधुमध्वितिचजपेत् अन्नहीनमत्रंपठेत् ततःकुशासूपविश्यपुनर्गायत्रीमधुवाताइत्यादित्र्यृचंमधुमधुम राम॰
ध्वितिचजपेत् रक्षोघ्नमंत्रान्कृणुष्वपाजइत्यादिकान्जपेत् नमोतिलान्क्षिप्त्वापित्र्यमंत्रपुरुषसूक्तप्रतिरथा, ४९

दीनिपवित्राणियथाशक्तिजपेत् ॐनमस्तुभ्यंविरूपाक्षेतिश्लोकमपिचपठेत् उच्छिष्टसन्निधावास्ततकुशत्रयंभू
मिंप्रोक्ष्यव्यंजनघृततिलयुतमन्नंवारिणाप्लाव्य ॐअनग्निदग्धायेजीवायेप्रदग्धाःकुलेममभूमौदत्तेनतृप्यंतुतृ
प्तायांतुपरांगति इतितदन्नंकुशोपरिविकिरेत् ततः सव्यंकृत्वाचम्यहरिंस्मृत्वापसव्यंकृत्वापिंडस्थानंनिर्मायत
न्मध्येवामहस्तोपात्तदक्षिणहस्तगृहीतदर्भपिंजुलीमूलेनप्रादेशमात्रमपहतेत्यादिनोल्लिख्यदर्भपिंजली
मुत्तरतस्त्यजेत् ततोरेखोपरिॐयेरूपाणीतिमंत्रेणांगारंभ्रामयित्वाअंगारंदक्षिणतस्त्यजेत् ततोरेखोपरिउ
पमूलसकृल्लूनकुशत्रयंदक्षिणाग्रमास्तीर्यसव्येन देवताभ्यइतित्रिर्जपेत्ततोऽपसव्यंकृत्वापुटकेतिलजलगं
धपुष्पाणिकृत्वामोटकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्धपिण्डस्थानेऽत्रावनेनि
क्ष्वतेमयादीयतेतवोपतिष्ठतामित्यवनेजनंकुशोपरिदद्यात् ततस्तिलघृतमधुयुतेनान्नेनपिण्डंकृत्वाघृतम
धुभ्यामभिधार्य्यादक्षिणहस्तेनमोटकादीनिचादाय ॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्धेए
षपिण्डस्तेमयादीयतेतवोपतिष्ठतामितिवामजान्वारभ्यदक्षिणहस्तेनावनेजनस्थानेपिंडंदद्यात् ततोद
र्भमूलेकरंप्रोञ्छ्य सव्यंकृत्वाचम्यहरिंस्मृत्वाअपसव्यंकृत्वादक्षिणाभिमुखः ॐअत्रपितर्मादयस्वयथाभागमा

श्रा० वृषायस्वेतिपठेत् ततउत्तराभिमुखीभूयश्वासंनियम्यपितरंभास्वरमूर्तिंध्यायनमुखंपर्यावर्तयन् अमीमदंतपिता
५० यथाभागमावृषायिषतेतिपठेत् ततोऽवनेजनपात्रेदत्तावशिष्टजलयुतंवामहस्तेकृत्वादक्षिणहस्तेमोदकादीन्या
दायॐअद्यामुकगोत्रपितरमुकप्रेतप्रथममासिकश्राद्धेपिण्डेऽत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामि
तिप्रत्यवनेजनंपिण्डोपरिदद्यात् ततोनीवीविस्रस्यसव्यंकृत्वाचम्य अपसव्यंकृत्वावामेनपाणिनाधृतंसूत्रंद
क्षिणेनादायउभाभ्यांपिण्डोपरिएतत्तेपितर्वासइतिसूत्रंधृत्वामोदकादीन्यादायॐअद्यामुकगोत्रपितरमु
कप्रेतप्रथममासिकश्राद्धपिण्डएतद्वासस्तेमयादीयतेतवोपतिष्ठतामितिसूत्रंसमुत्सृजेत् ततस्तूष्णींगंध
पुष्पादिकंदद्यात् ततःपिण्डशेषान्नंपिण्डसमीपेविकिरेत् ॐशिवाआपःसंत्वितिजलं ॐसौमनस्यम
स्त्वितिपुष्पं अक्षतंचारिष्टमस्त्वितितंडुलानन्नपात्रोपरिक्षिपेत् मोदकादीन्यादाय ॐअद्यामुकगोत्रस्यपि
तुरमुकप्रेतस्यप्रथममासिकश्राद्धेदत्तेतदन्नपानादिकमुपतिष्ठतामित्यक्षय्यंदद्यात् ततः सव्यंकृत्वा ॐअ
घोरःपितास्त्वितिदक्षिणांदिशंपश्यन्पिण्डोपरिपूर्वाग्रांजलधारांदद्यात् ततः पूर्वाभिमुखीभूय ॐगोत्रं राम
नोवर्द्धतांदातारोनोभिवर्द्धन्तांवेदाःसंततिरेवचेत्यादिनाशीःप्रार्थनंकुर्यात् ततोऽपसव्येनपिण्डोपरिसप ५०

विन्नान् कुशान् दत्वा पुटकादिस्थजलेन ॐ ऊर्ज्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितरमिति
कुशोपरि दक्षिणाग्रां जलधारां दद्यात् ततः पिण्डमाघ्रायोत्थापयेत् पिण्डाधारकुशानुल्मुकं च वन्हौ क्षिपेत् अर्घपा
त्रमुत्थाप्य मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृते तत्प्रथममासिकश्राद्धप्रतिष्ठार्थमिदं र
जतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे इति दक्षिणां दद्यात् ततः सङ्कल्पं कृत्वा ॐ देवताभ्य इति त्रि
र्जपेत् ततोपसव्यं कृत्वा पाणिना दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्यमाचमनं च कुर्यात् ॐ प्रमादादिति पठित्वा वि
ष्णुं स्मरेत् श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् प्रायेण पात्रकमेव मासिकश्राद्धं कुर्वतीत्यत्र पात्र
कप्रयोगो लिखितः त्रिपक्षश्राद्धमपि कर्तव्यमिति तत्त्वमासिकवत् एवमेव द्वितीयमासिकं तृतीयमासिकं चतुर्थ
मासिकं पंचममासिकोनषाण्मासिकषाण्मासिकसप्तममासिकाष्टममासिकानवममासिकदशममासिकैकाद
शमासिकोनवार्षिकद्वादशमासिकश्राद्धेषु तत्तत्सङ्क्षेपेण प्रयोग ऊह्यः अधिमासपाते एकादशमासिकानंतरं
द्वादशमासिकं तत ऊनवार्षिकं ततस्त्रयोदशमासिकं श्राद्धमिति क्रमः सपात्रकमासिकश्राद्धकरणे ब्राह्मणनिमं
त्रण स्वागतप्रश्न पाद्यार्घदानाचमनीयदानब्राह्मणोपवेशनप्रश्नप्रतिवचननमोवाचनब्राह्मणविसर्जनादिविशे

आ॰ वि॰ षआद्यश्राद्धप्रयोगवदूह्यइति· अथसपिण्डनश्राद्धप्रयोगः तत्रचाधुनिकाः प्रेतश्राद्धातिरिक्तश्राद्धचतुष्टयमपास्यैकमेव
५१ कुर्वंतीति तथैव लिख्यते तत्रपूर्वदिनेनिरामिषमेकवारंभुक्त्वारात्रौसर्वभुक्तजनगृहेविप्रनिवेशनंगत्वादक्षिणप्लव
गोमयोपलिप्तायांभूमावाचान्तउपविश्यब्राह्मणमुदङ्मुखमुपवेश्यकृतापसव्यःपुष्पचंदनतांबूलानिब्राह्मण
करेदत्वादक्षिणकरेणब्राह्मणजानुस्पृष्ट्वा ओं अस्यांरात्रावमुकगोत्रस्यपितुरमुकप्रेतस्यश्वःसपिण्डीकरणश्रा
द्धकरणायभवंतंब्राह्मणमामंत्रयेइत्यामंत्रणंकुर्यात् ॐ आमंत्रितोस्मीतिप्रतिवचनंततः ॐ अक्रोधनेनेत्यादि॰
सर्वायासविनिर्मुक्तेनकामक्रोधविवर्जितेनभवितव्यंभवतानःश्वस्तनेश्राद्धकर्मणीतिब्राह्मणंनियमान् श्रावयेत्
पघविधेनरजनीयास्यतितदासर्वंमेतत्करिष्यामीतितत्प्रतिवचनम् ततोऽग्रिमदिनेप्रातःश्वेतवस्त्रयुग्मेनस्नात्वा
मध्यदिनेपुनःस्नात्वाकृतनित्यक्रियःश्राद्धकर्ताश्राद्धनिषिद्धेतरवेलायांगोमयोपलिप्तारत्नपाकस्थानेतिलान्नि
कीर्यपरितश्छागान्बंधयित्वासपिण्डद्वारानूतनभाण्डैःस्वयंवापाकमारभेत् श्राद्धभूमिंपंचगव्येनोपलिप्यज्व
लदंगारैःसंशोध्यगौरमृत्तिकयाच्छघृततैलैःसर्षपैश्चविकिरेत् द्विजंकारितश्मश्रुनखच्छेदनमभिगम्यदंतधाव राम॰
नंताम्रपात्रेतैलोद्वर्तनान्युपनीयस्नानार्थंदत्तजलंतत्स्नातंयजमानसवर्णेनाहूतमाचांतंमध्यान्हेशुचिराचांतःशु ५१

क्तदिवासाउपविश्यगोमयोपलिप्तायांभूमौवामावर्तेनकृतगोमूत्रमंडलायां ॐभूम्यैनमः इत्यक्षतपुष्पैस्त्रिरर्चयि
त्वाभूमौकुशत्रयमास्तीर्यतदुपरितिष्ठन् ॐस्वागतमितिस्थितंब्राह्मणंपृच्छेत् ॐसुस्वागतमितितेनोक्ते ॐइदं
तेपाद्यमित्युपनीयविनीतःसन्पुनःपुनरभिनंद्यपात्रब्राह्मणपादौप्रक्षालयेत् ततःपुरकेऽर्घंकृत्वादक्षिणाभिमुखो
ऽपसव्यंकृत्वामोटकादिकमादायार्घपात्रंवामहस्तेकृत्वा ॐअद्यामुकगोत्रपितरमुकप्रेतसपिण्डीकरणश्राद्धएषपा
द्यार्घस्तेमपादीयतेतवोपतिष्ठतामितिपादार्घंदद्यात् ततोआचमनीयजलंपात्रस्थमभिनीयशिरसाभिवंद्यजानु
नीविभ्याव्य ॐइदंतेआचमनीयमित्याचमनीयजलंब्राह्मणायदत्वास्वयंपादौप्रक्षाल्याचम्यतमाचमय्याग्रेकृत्वा
श्राद्धदेशमागच्छेत् पूर्वरात्रौनिमंत्रणासंभवेतस्मिन्नेवान्हिश्राद्धवेलायांपूर्वोक्तविशेषणविशिष्टंयजमानस
वर्णोनाहूतंपूर्ववत्कृतगोमूत्रमंडलायांभूमावुभावप्युपविशतांततःश्राद्धकर्त्ता ॐइदंतेपाद्यमुपनीयविनी ॥९॥
तःपुनःपुनरभिनंद्यपात्रब्राह्मणपादौप्रक्षालयेत् ततोऽपसव्यंकृत्वापुष्पचंदनतांबूलानिविप्रकरेदत्वाब्राह्मण
ज्ञानुदक्षिणहस्तेनस्पृष्ट्वा ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डीकरणश्राद्धकरणायभवंतंब्राह्मणमहमा
मंत्रयइत्यामंत्र्य ॐआमंत्रितोस्मीतितेनोक्ते ॐस्वक्षोपनेनेत्यादिना ॐसर्वपापसविनिर्मुक्तेनेत्यादिनाचब्राह्मणंनिय

श्रा·वि मान् श्रावयेत् ॐ भवितव्यमिति तेनोक्ते अर्घपरिकल्प्य वामहस्ते कृत्वा मोटकादिकमादाय ॐ अद्यामुकगोत्र पितरमु
५२ कप्रेत सपिण्डीकरणश्राद्धे एष पादार्घस्ते मया दीयते तत्र वोपतिष्ठतामिति पादार्घं दद्यात् तत आचमनीयजलं पात्र
स्थं शिरसाभिवंद्य जानुनी विश्राम्य ॐ इदं ते आचमनीयमिति ब्राह्मणाय दत्वा सव्येन स्वयं पादौ प्रक्षाल्याचम्य त
माचम्याग्रे कृत्वा श्राद्धदेशमागच्छेत् तत्र प्राङ्मुख उपविश्य सिद्धमिति पृष्ट्वा आसनं स्पृष्ट्वाऽत्र निषदस्वेति ब्रा
ह्मणमुदङ्मुखमुपवेशयेत् द्विजपादयोस्तले कुशान् दद्यात् आसनसमीपे तिलतैलेन दीपं प्रज्वाल्य स्थाप
येत् अन्यांश्च प्रत्यासनसमीपे तिलतैलेन चतुरो दीपान् स्थापयेत् ब्राह्मणो नदीपरस्तात् कर्तव्या रक्षोघ्नान् गौरस
र्षपांस्तिलान् श्राद्धदेशे सन्निधापयेत् काककुक्कुटादीन् श्राद्धहन्तॄन् अपसारयेत् ततः ॐ अपवित्रः पवित्रो वेत्यादि
पठित्वा ॐ पुंडरीकाक्षः पुनात्विति श्राद्धीयद्रव्याणि चात्मानं कुशत्रयेण सिंचयेत् ततः कुशत्रयतिलजलान्या
दाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्तिहेतु षोडशश्राद्धान्तर्गत सपिण्डीकरणश्राद्धमहं करिष्ये इ
ति संकल्पं कुर्यात् ॐ कुरुष्वेति ब्राह्मणो वदेत् ॐ गायत्रीजपमहं करिष्ये इति ब्राह्मणं पृच्छेत् ॐ कुरुष्वेति तेनानुज्ञातः राम·
प्रणवव्याहृतिसहितां गायत्रीं त्रिर्जपेत् ततो देवताभ्य इति त्रिर्जपेत् ततो देवश्राद्धार्थोपकल्पितासनादिदेशमाग ५२

त्वोदङ्मुख उपविश्य कुशत्रय यव जलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकामुकगो
त्र पितामह प्रपितामह वृद्ध प्रपितामहामुकामुकशर्म श्राद्ध संबंधिनो विश्वे देवा इदमासनं वो नम इति पूर्वाग्रकुशत्र
य रूपं सजलयव प्रोक्षितमुत्सृजेत् ॐ विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वे देवास आगत शृणुताम इम
ꣳ हवम् एदं बर्हिर्निषीदतेत्यावाह्य ॐ यवोसि यव यास्मद्द्वेषो यव यारातीरिति यवान्विकीर्य ॐ विश्वे देवाः शृणु
तेमꣳ हवम्मे ये अन्तरिक्षे य उप द्यवि ष्ठ ये अग्नि जिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्व
म् ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ये यत्र योजिताः श्राद्धे सावधाना भवंतु ते इति पठेत् ततः पुटके द्व
यो ग्रपवित्रं धृत्वा ॐ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु न इति जलं क्षिप्त्वा ॐ यवो ऽसीति यवान्
प्रक्षिप्य गंधपुष्पे तूष्णीं तत्र प्रक्षिप्य अर्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे पूर्वाग्रं धृत्वा तदुपरि किंचिदुदकांतरं द
त्वा ॐ या दिव्या आपः पयसा संबभूवुर्या आन्तरिक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः स
ꣳ स्योनाः सुहवा भवन्त्विति पठित्वा कुशत्रय यवजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकर
णनिमित्तकामुकगोत्र पितामह प्रपितामह वृद्ध प्रपितामहामुकामुकशर्म श्राद्ध संबंधिनो विश्वे देवा एष वो हस्तार्घं

श्रा० नमइतिपवित्रोपरि अर्घजलमुत्सृजेत् ततः पवित्रसहितमर्घपात्रमासनदक्षिणपार्श्वे ॐविश्वेभ्योदेवेभ्यः स्थानम
५३ सीति विश्वेदेवार्घपात्रमुत्तानं स्थापयेत् ततः कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यस
पिण्डीकरणनिमित्तकामुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहामुकामुकशर्मश्राद्धसंबंधिनोविश्वेदेवाए
तानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसिवोनमइतिगंधादीनुत्सृजेत् ततोभोजनपात्रासनयोश्चतुर्दिक्षु
जलेनचतुष्कोणमंडलंकृत्वा अपसव्येनमोदकादिकमादायतिलघृतव्यंजनयुतमन्नं ॐइदमन्नमेतद्भूस्वामिपितृभ्यो
नमइतिदक्षिणामुखमुत्सृजेत् ततः सव्यंकृत्वाताम्रपात्रादिकंगृहीत्वातेनान्नमादायमनाक्स्थित्वा देवान्ध्यायन्
पात्रेपरिविष्यात् अंजनानिघृतेजलंचतत्रोपनीयान्नोपरिमधुदत्वा ॐ मधुवाताइतिऋचा ॐमधुमधुमध्वितिमंत्रे
णान्नमभिमंत्रयेत् ततऋजुहस्ताभ्यामन्नपात्रमालभ्य ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृ
तेऽअमृतंजुहोमिस्वाहा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपांसुरइतिचपठित्वा ॐकृष्णहव्य
मिदंरक्षमदीयमितिपठित्वा ॐइदमन्नमित्यन्ने ॐइमाआपइतिजले ॐइदमाज्यमितिघृते ॐइदंहविरितिपुनरन्न राम
दक्षिणकरांगुष्ठमावेश्य ॐ यवोसीत्यन्नोपरियवान्निक्षिप्य कुशत्रययवजलान्यादाय ॐ अद्यामुकगोत्रस्यपितुरमुक ५३

प्रेतस्य सपिण्डीकरणनिमित्तकामुकगोत्र पितामह प्रपितामह वृद्धप्रपितामहामुकामुकशर्मणां श्राद्ध संबंधिनो वि
श्वेदेवा एतद्धोऽन्नं सोपकरणं नमः इत्यन्नमुत्सृजेत् एवं देवकार्यं निर्वर्त्येह सोपादो प्रक्षाल्य कुशवटुकादिकं पुनर्गृ
हीत्वा प्रेतश्राद्धदेशमागत्योपविश्य अपसव्यादिकृत्वा दक्षिणाभिमुखो मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमु
कप्रेत सपिण्डीकरणश्राद्ध इदमासनं ते मया दीयते तवोपतिष्ठतामिति पित्रे आसनं मोटकरूपं तिलजलप्रोक्षि
तमुत्सृजेत् पुनर्मोटकादिकमादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धेऽमुकगोत्र
स्य पितामहस्यामुकशर्मण इदमासनं ते स्वधा इति स्थानत्रये कृतासनेषु सर्वपश्चिमस्थानस्थितमासनं पितामहा
योत्सृजेत् पुनर्मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धेऽमुकगोत्र
स्य प्रपितामहस्यामुकशर्मण इदमासनं ते स्वधा इति मध्यममासनं प्रपितामहायोत्सृजेत् पुनर्मोटकादिकमादाय
ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धेऽमुकगोत्रस्य वृद्धप्रपितामहस्यामुक
शर्मण इदमासनं ते स्वधेति सर्वपूर्वमासनं वृद्धप्रपितामहायोत्सृजेत् ततः पितामहादीनुद्दिश्य ॐ पितॄन् अहमा
वाहयिष्य इत्युक्त्वा ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवाह पितॄन्हविषे अत्तवे

श्रा० इतिपितामहादीनावाह्य ॐअपहतेत्यादि उभयत्र श्राद्धस्थानेतिलान्विकीर्य ॐ आयन्तुनः पितर इत्यादिमंत्रंजपेत् त
५४ तोऽर्घपात्रत्रयेऽनवच्छिन्नदक्षिणाग्रंपवित्रंप्रत्येकंधृत्वा ॐ शन्नोदेवीरितिप्रत्येकंजलंक्षिप्त्वा ॐ तिलोसीति
स्वाहांतेनमंत्रेणप्रत्येकंतेष्वेव तिलान्प्रक्षिप्यगंधपुष्पेतेष्वेवतूलीप्रक्षिप्यपेतार्घपात्रंवामहस्तेकृत्वापवित्रपाण
त्रंब्राह्मणकरे उत्तानंधृत्वातदुपरिकिंचिज्जलांतरंदत्वा ॐ यादिव्या आप इतिपठित्वामोदकादीन्यादाय ॐ अद्या
मुकगोत्रपितरमुकप्रेतसपिण्डीकरणश्राद्धे एषहस्तार्घस्तेमयादीयते तवोपतिष्ठतामितिपात्रंब्राह्मणहस्तेप
वित्रोपरि अर्घजलंददुत्सृजेत् अवशिष्टजलसहितार्घपात्रंब्राह्मणाग्रेनिदध्यात् पितामहार्घपात्रंवामहस्ते
कृत्वापवित्रंभोजनपात्रेधृत्वातदुपरिजलांतरंदत्वा ॐ यादिव्या इत्यादिपठित्वामोदकादीन्यादाय ॐ अद्यामुकगो
त्रस्यपितुरमुकप्रेतस्यसपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रपितामहामुकशर्मन्नेषतेहस्तार्घः स्वधेतिपूर्व
वदर्घंदद्यात् अवशिष्टजलप्लुतमर्घपात्रमग्रेधारयेत् ततः प्रपितामहार्घपात्रंवामहस्तेकृत्वापवित्रंभोजनपा
त्रेधृत्वातदुपरिजलांतरंदत्वा ॐ यादिव्या इत्यादिपठित्वामोदकादीन्यादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रे राम०
तस्यसपिण्डीकरणनिमित्तिकश्राद्धे अमुकगोत्रप्रपितामहामुकशर्मन्नेषतेहस्तार्घः स्वधेत्यर्घंदत्त्वापूर्ववदुत्सृ ५४

ततो यार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलोत्
जेत् तदर्घपात्रमवशिष्टजलयुतमग्रे स्थापयेत् ततो यार्घपात्रं वामहस्ते कृत्वा पवित्रं भोजनपात्रे धृत्वा तदुपरि जलोत
रं दत्वा ओं या दिव्या इति पठित्वा मोरकादीन्यादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्त
क श्राद्धे अमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेष ते हस्तार्घः स्वधेति पूर्ववदर्घमुत्सृजेत् अवशिष्टजलयुतार्घपा
त्रमग्रे स्थापयेत् ततः सव्यं कृत्वा आचम्य अपसव्यं कृत्वा पुटकत्रयमग्रे धृत्वा प्रेतार्घपात्रं गृहीत्वा ओं ये समानाः सु
मनसः पितरो यमराज्ये तेषां ल्लोकः स्वधा नमो यज्ञो देवेषु कल्प्यताम् ये समानाः सुमनसो जीवा जीवेषु मामकाः
तेषां श्रीर्मयि कल्प्यतामस्मिंल्लोके शतं समाः इति मन्त्राभ्यां प्रेतार्घपात्रस्थजलतृतीयभागं पुटकान्तरे धृत्वा
पुनरपि मन्त्रद्वयं पठित्वा परतृतीयभागं पुटकान्तरे धृत्वा प्रेतार्घपात्रस्थतृतीयभागजलं पुटकान्तरे धृत्वा तूष्णीं प्रथ
मपुटकस्थविभक्तजलतृतीयभागं प्रेतार्घपात्रे कृत्वा पवित्रपुष्पसहितं प्रेतार्घपात्रमादाय ओं ये समाना इति मन्त्रद्व
येन प्रेतार्घपात्रस्थतृतीयभागजलं पितामहार्घपात्रस्थजले मेलयेत् एवमपरपुटकस्थितार्घतृतीयभागद्वयं क्र
मेण प्रत्येकं प्रेतार्घपात्रे कृत्वा प्रत्येकं मन्त्रद्वयं पठित्वा प्रपितामहार्घपात्रस्थजले वृद्धप्रपितामहार्घपात्रस्थजले मेल
येत् ततः प्रेतार्घपात्रं ब्राह्मणवामपार्श्वे ओं पितृस्थानमसीति न्युब्जं कृत्वा स्थापयेत् वृद्धप्रपितामहार्घपात्रस्थजलादि

श्रा० कंप्रपितामहार्घपात्रेकृत्वाततस्सर्वंपितामहार्घपात्रेकृत्वापितामहार्घपात्रमुत्तानंप्रपितामहपात्रोपरिधृत्वातद्दूय
५५ मुत्तानंवृद्धप्रपितामहार्घपात्रोपरिधृत्वापात्रत्रयमेकदैवपितामहासनवामपार्श्वे ॐपितृभ्यःस्थानमसीतिन्युब्जंकृत्वा
स्थापयेत् एवंस्थापितमर्घपात्रचतुष्टयंदक्षिणापर्यंतंनचालयेत् ततोमोदकादिकमादाय ॐअद्यामुकगोत्रपि
तरमुकप्रेतसपिण्डीकरणश्राद्धेएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेमयादीयंतेतवोपतिष्ठंतामि
तिपित्रेगंधादीनिदद्यात् पुनर्मोदकादीन्यादाय ॐअद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिण्डीकरणनिमित्तकं
श्राद्धेअमुकगोत्रपितामहामुकशर्मन्नेतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेस्वधेतिपितामहायगं
धादीन्युत्सृजेत् एवंप्रपितामहायवृद्धप्रपितामहायचगंधादीन्युत्सृजेत्यथाक्रमेणततःपितृब्राह्मणहस्तेस्व
हस्तेनॐएषगन्धइतिचंदनंनिवेदयेत् ॐसुगंधिइतितेनोक्ते ॐएतानिपुष्पाणीतिनिवेदयेत् ॐसुपुष्पाणी
तितेनोक्ते ॐएषधूपइतिनिवेदयेत् ॐसुधूपइतितेनोक्ते ॐएषदीपइतिदीपंनिवेदयेत् ॐसुदीपइतितेनो
क्ते ॐइमेयज्ञोपवीतेइतिनिवेदयेत् ॐसुयज्ञोपवीतेइतिप्रत्युक्ते ॐएतानिवासांसीतिनिवेदिते ॐसुवासांसी राम०
तितेनोक्तेब्राह्मणायप्रतिपादयेत् पुष्पाणिशिखातिरिक्तदेशेनधारयेत ततःपात्रब्राह्मणचतुर्दिशंचतुष्कोणमंड ५५

लं जलेनकुर्यात् अपरं पितामहादिचिह्नके चतुष्कोणं मंडलं कुर्यात् ततः सव्यं कृत्वा प्राङ्मुख उपविश्य पातितदक्षिणजानुस्ता
म्रपात्रादौ व्यंजनक्षारवर्जितमघृतमन्नं कृत्वा पुटकादिस्थजलेहस्तेन ॐ अग्नये कव्यवाहनाय स्वाहा ॐ सोमाय पितृमते
स्वाहा इत्याहुतिद्वयं तदन्नेच जुहुयात् ततअपसव्यं कृत्वाः वशिष्टमन्नं पितामहादिपात्रे किंचित्किंचिद्दद्यात् पिंडार्थं
चावशेषयेत् ततोहस्ताभ्यां ताम्रपात्रमादाय तेनान्नं गृहीत्वा प्रेतपात्रे ध्यायन्परिविष्यात् पृथक्पुटकादिस्थितानि
घृतजलव्यंजनानि चोपनयेत् ततस्तेनैव क्रमेण पितामहादिपात्रत्रये प्रत्येकमन्नादिपरिवेषणं कुर्यात् ततः
प्रेतपात्रादिस्थितान्नेषु प्रत्येकं मधु दद्यात् ततः प्रत्येकमभिमंत्रयेत् ॐ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्नः
सन्त्वोषधीः ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमा २॥ अस्तु सू
र्य्याः माध्वीर्गावो भवन्तु नः ॐ मधु मधु मध्विति मंत्रैः ततः प्रेतान्नपात्रे न्यस्ताभ्यां न्युब्जाभ्यां हस्ताभ्यामालभ्य ॐ पृथिवी
ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य
पां॰ सुरे इति जपित्वा ॐ कृष्ण कव्यमिदं रक्ष मदीयमित्युक्त्वा पात्रे ब्राह्मणस्य दक्षिणहस्तांगुष्ठं गृहीत्वा ॐ इदमन्नं
ॐ इमा आपः ॐ इदमाज्यम् ॐ इदं हविः इति क्रमेणान्नजलघृतान्नेषु तन्निवेद्य ॐ अपहता इत्यन्नोपरि स्रुवु

श्रा॰ रतिलान् प्रक्षिप्य मोटकादीन्याय ॐ अद्यामुकगोत्रपितरमुकप्रेतसपिराडीकरणनिमित्तक श्राद्धे इदमन्नं सोपकरणं ते
५६ मस्माकीयमेतत्त्वोपतिष्ठतामितिपित्रेऽन्नमुत्सृजेत् अनेनैवक्रमेण पितामहान्नपात्रमालभ्य ॐ पृथिवी ते पात्रमित्यादि
पठित्वा ॐ इदमन्नमित्यादिना स्वदक्षिणहस्तांगुष्ठनिवेशनं कृत्वा ॐ अपहता इत्यादिना तिलानन्ने विकीर्य्य मोटका
दीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धेऽमुकगोत्र पितामहामुकशर्मन्ने
तत्तेऽन्नं सोपकरणं स्वधेति पितामहायान्नमुत्सृजेत् ततः प्रपितामहान्नपात्रमालभ्य पूर्ववत् ॐ पृथिवी ते पात्र
मित्यादिकं सर्वं कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तक श्राद्धेऽमु
कगोत्र प्रपितामहामुकशर्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति प्रपितामहायान्नमुत्सृजेत् ततो वृद्धप्रपितामहा
न्नपात्रमालभ्य पूर्ववत् ॐ पृथिवी ते पात्रमित्यादिकं सर्वं कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुर
मुकप्रेतस्य सपिंडीकरणनिमित्तक श्राद्धेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेतत्तेऽन्नं सोपकरणं स्वधेति वृद्धप्र
पितामहायान्नमुत्सृजेत् ततः ॐ भवान् प्राशयत्विति पात्रं ब्राह्मणाय जलचुलुकं दत्वा सप्रणवव्याहृतिकां गाय राम॰
त्रीम् ॐ मधुवाता इत्यादि ऋचत्रयं ॐ मधु मधु मध्विति च जपित्वा ॐ अन्नहीनमित्यादि च पठित्वा ॐ यथासुखं जुषध्वं ५६

तिपात्रवाह्मणांप्रतिब्रूयात् सर्व ॐकारपूर्वं वामेनपाणिनापात्रमत्यजन् चुलुकंगृहीत्वाभुंजीत हौँसक्रोधत्वरादिकंनकुर्यात्
त् व्यंजनार्थंहस्तादिनापिसंज्ञांनकुर्यात् श्राद्धकर्तादर्भेष्वासीनःसप्रणवव्याहृतिकांगायत्रीं ॐमधुवाताइत्यादित्रिः
चं ॐमधुमधुमध्विति चजपेत् गायत्रींब्राह्मणमनुश्रावयेत् ॐकृणुष्वपाजइत्यादीन् रक्षोघ्नान्मंत्रान् पठित्वाभूमिंतिः
लैरास्तीर्य श्राद्धीयब्राह्मणांपितृरूपतयाध्यात्वा ॐ उदीरतामित्यादिपितृमंत्रान् ॐसहस्रशीर्षाइत्यादिपुरुषसूक्तं
ॐ आशुःशिशानइत्यादिकमप्रतिरथमन्यानिचशिवसंकल्पप्रभृतीनिपवित्राणिऋग्यजुःसामानिरुचिस्तवप्र
भृतीनिचयथाशक्तिजपेत् ॐनमस्तुभ्यंविरूपाक्षइतिश्लोकमपिपठेत् वीराध्वनिभिर्ब्राह्मणांहर्षयन् व्यंजन
गुणान् इदमन्नमित्यादिकंभेराकीर्तयन् यत्रयत्रेच्छोपलभ्यतेतत्स्यतत्तदुपनयन् मंदंमंदंभोजयेत् ततस्त
मब्राह्मणांस्तृप्ताञ्ज्ञात्वा पात्रसन्निधावास्तृतदक्षिणाग्रकुशत्रयांभूमिंप्रोक्ष्यसर्वप्रकारकमन्नमादायसतिल
घृतंजलेनाप्लाव्य ॐअनग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेममभूमौदत्तेनतृप्यन्तुतृप्तायांतुपरांगतिमित्यास्त
त् कुशोपरितदन्नंविकिरेत् ततःसव्यंकृत्वाचामेत् हरिंस्मृत्वा अपसव्येनपात्रब्राह्मणाय ॐइदंतेप्रत्यासोदा
नमितिजलंगंडूषंदत्वा ॐस्वदितमितिपृष्ट्वा ॐसुस्वदितमितितेनोक्ते ॐपिण्डमहंकरिष्येइतिपृच्छेत् ॐकुरुष्व

श्रा स्यनुदात: पात्रंब्राह्मणाय त्वमनार्येपात्रंदापयेत् तत: प्रेतपिण्डदानार्थमेकामपरां पितामहादित्रिकापिण्डदानार्थमे
५७ कहस्तमितांचतुरस्रांचतुरंगुलोच्छ्रितांसैकतीं दक्षिणाप्लवांपिण्डिकांनिर्माय तन्मध्येवामेनपाणिनादर्भपिंजुलींगृ
हीत्वादक्षिणहस्तेनकृत्वातन्मूलेनसव्योपगृहीतदक्षिणपाणिना ॐ अपहता इत्यादिपठित्वादक्षिणाग्रांरेखा
मादेशप्रमाणांसंकृदुल्लिख्यदर्भपिंजुलीमुत्तरपूर्वादिक्षुक्षिपेत् एवमेवापरपिण्डिकायामप्येकांरेखांकुर्यात् तत:
पूर्वपिंडिकारेखोपरि ॐ येरूपाणिप्रतिमुंचमानाऽअसुरा:सन्त:स्वधयाचरन्ति परापुरोनिपुरोयेभरन्त्यग्निष्टां
ल्लोकान्प्रणुदात्वस्मादितिमंत्रेणांगारंभ्रामयित्वादक्षिणत:क्षिपेत् एवमेवापररेखायामंगारंभ्रामयेत् ततउभ
यत्ररेखायांसुपमूलसकृल्लूनान्दक्षिणाग्रान्कुशानस्तृणुयात् तत:सव्यंकृत्वा ॐ देवताभ्य इतित्रिर्जपेत् ततो
ऽपसव्यंकृत्वापुटकचतुष्टयेजलतिलगंधपुष्पाणिकृत्वाएकंपुटकंवामहस्तेकृत्वामोटकादीन्यादायॐअद्यामु
कगोत्रपितरमुकप्रेतसपिण्डीकरणश्राद्धेपिंडस्थानेऽत्रावनेनिनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिपूर्वपिं
डिकायांछिन्नमूलोपरिअवनेजनंदद्यात् ततोऽपरंपुटकंवामहस्तेकृत्वा मोटकादीन्यादाय ॐ अद्यामुकगो राम
त्रस्यपितुरमुकप्रेतस्यसपिण्डीकरणनिमित्तकश्राद्धपिण्डस्थानेऽमुकगोत्रपितामहामुकशर्मन्नत्रावनेनिक्ष्वते ५७

स्वधास्त्विति ... कार्यामास्तृतकुशमूलसन्निधाने पितामहायावनेजनजलं दद्यात् ततोऽपरिपुटकं वामहस्ते
कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे
पिण्डस्थानेऽमुकगोत्र प्रपितामहामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधेत्यास्तृतकुशमध्ये प्रपितामहायावनेजनज
लं दद्यात् ततोऽपरं पुटकं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीक
रणनिमित्तकश्राद्धे पिण्डस्थानेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्रावनेनिक्ष्व ते स्वधेत्यास्तृतकुशाग्रे वृ
द्धप्रपितामहायावनेजनजलं दद्यात् ततः सर्वव्यंजनतिलमध्वाज्यसहितान्नेन प्रेतपिंडं सर्वव्यंजनतिलज
लमध्वाज्यकृतशेषान्नेन पिण्डत्रयं च निर्माय चतुरः पिण्डान्मधुघृताभ्यामभिधार्य प्रथमं प्रेतपिंडं दक्षिणहस्ते
न मोटकतिलजलानि चादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरणश्राद्ध एष पिंडस्ते मया दीयते त
वोपतिष्ठतामिति पूर्वपिण्डिकायां कुशोपरि पित्रे पिंडं दद्यात् ततोऽपरमोटकादीनि चादाय ॐ अद्यामुकगोत्र
स्य पितुरमुकप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्र पितामहामुकशर्मन्नेष पिंडस्ते स्वधेति द्वितीयपिंड
कायां प्रथमावनेजनस्थाने पितामहाय पिंडं दद्यात् पुनर्मोटकादीनि पिण्डं चादाय ॐ अद्यामुकगोत्रस्य पितुरमु

कप्रेतस्य सपिंडीकरणनिमित्तकश्राद्धेऽमुकगोत्र प्रपितामहामुकशर्मन्नेषते पिंडः स्वधेति प्रपितामहाया परावने

जनस्थाने पिंडं दद्यात् पुनर्मोटकादीनि पिंडे चास्तीर्य ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक
श्राद्धेऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नेषते पिण्डः स्वधेति वृद्धपितामहाया परावनेजनस्थाने पिण्डं दद्यात् त
तः पितामहादि पिंडास्तरणाकुशमूले ॐ लेपभागभुजस्तृप्यन्त्विति करं प्रोक्ष्य सव्यं कृत्वाचम्य हरिं स्मरेत् ततोऽपस
व्यं कृत्वा दक्षिणाभिमुखः पितरमुद्दिश्य ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्वेति पठित्वोत्तराभिमुखो भूत्वा
श्वासं नियम्य भास्करमूर्तिं पितरं ध्यायन् मुखं दक्षिणां दिशं प्रत्यावर्त्तयन् ॐ अमीमदंत पितरो यथाभागमावृषा
यिषतेति पठेत् पितामहादीनुद्दिश्य दक्षिणामुखः ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति पठेत् उ
त्तराभिमुखो भूत्वा श्वासं नियम्य तुष्टान् भास्करमूर्तीन् पितामहादीन् ध्यायन् मुखं दक्षिणां दिशं प्रत्यावर्तयन् ॐ अमी
मदंत पितरो यथाभागमावृषायिषतेति पठेत् ततः प्रत्यवनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्या
मुकगोत्र पितरमुकप्रेत सपिंडीकरणश्राद्धे पिण्डेऽत्र प्रत्यवनेनिक्ष्व ते मया दीयते तवोपतिष्ठतामिति पित्रे प्रत्य 
वनेजनं दत्वा पितामहावनेजनपात्रं वामहस्ते कृत्वा मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य स 

पिण्डीकरणनिमित्तक श्राद्धे पिण्डे ऽमुकगोत्र पितामहामुकशर्मन्नत्र [illegible] स्वधेति पितामहाय प्रत्यवनेजन

जलं दद्यात् प्रपितामहावनेजनपात्रं गृहीत्वा मो[illegible]कादीन्यादाय ॐ अद्यामुकगोत्रस्य [illegible]तुरमुकप्रेतस्य [illegible]पिण्डीक

रणनिमित्तकश्राद्धे पिण्डे ऽमुकगोत्र प्रपितामहामुकशर्मन्नत्र प्रत्य[illegible]नेनिक्ष्वते स्वधेति प्रपितामहाय प्रत्यवने

जनं दद्यात् ततो ऽवशिष्टं पुटकमादाय मोटकादीनि चादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरण

निमित्तकश्राद्धे पिण्डे ऽमुकगोत्र वृद्धप्रपितामहामुकशर्मन्नत्र त्यवनेनिक्ष्वते स्वधेति वृद्धप्रपितामहाय प्रत्य

वनेजनं दद्यात् ततो नीवीं विस्रस्य सव्यं कृत्वाचम्य हरिं स्मृत्वा अपसव्यं कृत्वा वामेन पाणिनाधृतं सूत्रं दक्षि

णेनादाय ॐ एतद्वः पितरो वासः ततभ्यांहस्ताभ्यां पितृपिंडोपरि सूत्रं धारयेत् पूर्ववत्पुनः सूत्रमादाय ॐ नमो

वः पितरो रसाय नमो वः पितरः शोषाय नमो [illegible] पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो

वः पितरो मन्यवे नमो वः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्म ॐ एतद्वः पितरो वास इति मंत्रं

पठित्वा प्रत्येकं पिण्डोपरि सूत्रं धारयेत् ततो मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकप्रेत सपिण्डीकरण

श्राद्ध पिण्डेष्वेतद्वासस्तेमयादीयते तत्वोपतिष्ठतामिति पित्रे सूत्रमुत्सृजेत् ततो मोटकादीन्यादाय ॐ अद्यामुक

श्रा० प्रेतस्यसपिराडीकरण निमित्तकश्राद्धे पिराडे ऽमुकगोत्रपितामहामुकशर्मन्नेतत्त वासः स्वधेतिसूत्रं पितामहायोत्सृ
५९ जेत् मोदकादीन्यादाय ॐ अद्यामुकगोत्रस्यपितुरमुकप्रेतस्यसपिंडीकरणनिमित्तकश्राद्धपिराडे ऽमुकगोत्रप्र
पितामहामुकशर्मन्नेतत्तेवासः स्वधेतिप्रपितामहायोत्सृजेत् पुनर्मोदकादीन्यादाय॰ ॐ अद्यामुकगोत्रस्य
पितुरमुकप्रेतस्यसपिराडीकरणनिमित्तकश्राद्धपिराडे ऽमुकगोत्रवृद्धप्रपितामहामुकशर्मन्नेतत्त वासः स्वधे
तिवृद्धप्रपितामहायसूत्रमुत्सृजेत् ततः प्रत्येकं पितृपिराडीदिषुगंधपुष्पधूपदीपतांबूलानिदद्यात् ततः पि
राडसमीपे तत्तत्पिराडशेषान्नं विकिरेत् ततः पिराडेषु सूत्रादिकमपनीय हस्तद्वयेनसुवर्णरजतकुशानादाय
ॐ येसमाना इत्यादिमंत्रद्वयंपठित्वा प्रेतपिंडं त्रिधाविभजेत् वारद्वयंमंत्रपाठः ततः प्रथमपिंडभागमादाय
ॐ येसमानाः सुमनसः पितरोयमराज्येतेषांल्लोकः स्वधानमोयज्ञोदेवेषुकल्प्यताम् येसमानाः सुमनसोजी
वाजीवेषुमामकाः तेषां श्रीर्मयिकल्प्यतामस्मिंल्लोकेशतं समाः इतिमंत्रद्वयेनपितामहपिराडेनियोज
येत् एवद्वितीयपिंडभागमादायमंत्रद्वयेनप्रपितामहपिंडेनियोजयेत् एवंतृतीयपिराडभागमादायमंत्र एम
द्वयेनवृद्धप्रपितामहपिंडेनियोजयेत् ततः प्रेतभागेनसहपिराडत्रयंप्रत्येकमेकीकृत्यसमंवर्तुलंकुर्यात् ५९

ततः प्रेत पूर्वकं पितामहादीनुद्दिश्य पिण्डत्रये ऽर्घपुष्पधूपदीपनैवेद्यताम्बूलानि दद्यात् ततः सव्येन देवान्नपात्रे ॐ
शिवा आपः सन्तु इति जलं दत्वा अपसव्येन पितृब्राह्मणहस्ते पूर्वमन्त्रेणजलं दद्यात् ॐ सन्त्विति प्रतिवचनम्
ततः पितामहाद्यन्नपात्रेषु प्रत्येकं जलं दद्यात् अनेनैव क्रमेण ॐ सौमनस्यमस्त्विति देवान्नपात्रे पुष्पम् त
तोऽपसव्येन पितृब्राह्मणहस्ते अनेनैव मंत्रेण पुष्पं ततः पितामहाद्यन्नपात्रत्रिकेऽनेनैव मंत्रेण प्रत्येकं पुष्पं द
द्यात् ततः सव्येनाक्षतं चारिष्टमस्त्विति देवान्नपात्रे तंडुलं प्रक्षेपः ततोऽपसव्येन प्रेत श्राद्धपात्रब्राह्मणहस्ते
ॐ अक्षतं चारिष्टमस्त्विति तंडुलप्रक्षेपः ततः ॐ अस्त्विति ब्राह्मणप्रतिवचनम् पितामहाद्यन्नपात्रत्रिके पि
प्रत्येकं ॐ अक्षतं चारिष्टमस्त्विति तंडुलप्रक्षेपः ततो मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपि
ण्डीकरणनिमित्तक श्राद्धेऽमुकगोत्रस्य पितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्त्विति पितामहा
द्याक्षय्योदकं दद्यात् पुनर्मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे
ऽमुकगोत्रस्य प्रपितामहस्यामुकशर्मणो दत्तैतदन्नपानादिकमक्षय्यमस्त्विति प्रपितामहाद्याक्षय्योदकं दद्यात्
एवं वृद्धप्रपितामहाद्याक्षय्योदकं दद्यात् ततः सव्यं कृत्वा कृताञ्जली सन्तु मनाः सुमनादक्षिणां दिशं पश्यन् ॐ

श्रा ६० अघोराः पितरः संत्विति पितामहादि पिंडत्रयोपरि पूर्वाग्रां जलधारां दद्यात् ॐ संत्विति ब्राह्मण प्रतिवचनम् अत्र वा
रिधारादानमाचारात् अन्यथा तु पाठमात्रम् ततः प्राङ्मुखो गोत्रं नो वर्द्धतामिति पठेत् ।। ५ ।। ६ ।।

।। ५ ।। ६ ।। ॐ वर्द्धतामिति प्रतिवचनम् दातारो नो भिवर्द्धन्तां वेदाः संततिरेव च श्रद्धा च नो मा व्यगमद्बहु
देयं च नो स्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या
शिषः संत्विति याचेत् ॐ संत्विति प्रतिवचनम् ततोऽपसव्यं कृत्वा पिण्डोपरि सपवित्रकुशत्रयं दक्षिणाग्रमास्ती
र्य ॐ नमो वाचयिष्ये इति ब्राह्मणं ब्रूयात् ॐ वाच्यतामित्यनुज्ञातः ॐ पित्रे नमः उच्यतामिति ब्राह्मणं ब्रूयात्
ॐ अस्तु नम इति ब्राह्मणो वदेत् ततो वामहस्तोद्धृतं जलपात्रं दक्षिणेनादाय ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः
कीलालं परिस्रुतम् स्वधास्थ तर्प्पयत मे पितॄनिति पित्रादीनुद्दिश्य सपवित्रकुशोपरि दक्षिणाग्रां जलधारां दद्या
त् ततो नम्रीभूय पिंडानाघ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकं च वह्नौ प्रक्षिपेत् सव्येन देवार्घपात्रं संचाल्य एम ६०
अपसव्येन पित्राद्यर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् ततः सव्येन कुशत्रययवजलदक्षिणाद्रव्याण्यादाय

ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तकश्राद्धेऽमुकगोत्रपितामहप्रपितामहवृद्धप्रपितामहानाममुकामुकशर्मणां श्राद्धसंबंधिनां विश्वेषां देवानां कृते तच्छ्राद्धप्रतिष्ठार्थमिदं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति प्राङ्मुख उत्सृजेत् ततोऽपसव्यं कृत्वा दक्षिणामुखो मोटकतिलजलान्यादाय दक्षिणां चादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य कृते तत्सपिण्डीकरणश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणां तुभ्यमहं संप्रददे इति दक्षिणां पितृब्राह्मणकरे दद्यात् ओं स्वस्तीति प्रतिवचनम् पुनस्तथैव दक्षिणाद्रव्यादिमादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे कृते तदमुकगोत्रपितामहामुकशर्म श्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति पितामहश्राद्धदक्षिणां दद्यात् पुनर्दक्षिणाद्रव्यादिकमादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे कृते तदमुकगोत्रप्रपितामहामुकशर्म श्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति प्रपितामहश्राद्धदक्षिणां दद्यात् पुनर्दक्षिणाद्रव्यादिकमादाय ओं अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य सपिण्डीकरणनिमित्तक श्राद्धे कृते तदमुक

श्रा· गोत्रवृद्धप्रपितामहामुकशर्मश्राद्धप्रतिष्ठार्थमिदंरजतंचंद्रदैवतंयथानामगोत्रायब्राह्मणायदक्षिणांदातुमहमु
६१ त्सृजेइतिवृद्धप्रपितामहश्राद्धदक्षिणांदद्यात ततःसव्यंकृत्वा ॐविश्वेदेवाःप्रीयन्तामितिदेवविसर्जनंकृत्वा अ
पसव्यंकृत्वा पितृश्राद्धब्राह्मणं ॐनिरोंकारंस्वस्तिब्रूहीतिवदेत् स्वस्तीतितेनोक्तेस्वस्त्यस्तुइतिपितृब्राह्मणं विसृज्यगृही
तपितृब्राह्मणांगुष्ठोपगृहीतोदकपात्रोवहिर्निर्गत्यस्थानमागत्यब्राह्मणांस्थापयित्वा ॐआमावाजस्यप्रसवोज
गम्यादेमेद्यावापृथिवीविश्वरूपे आमागन्तांपितरामात एवामासोमोऽमृतत्वेनगम्यादितिप्रदक्षिणीकुर्वन् पूर्वव
दुदकधारयात्रिर्वेष्टयेत् ततःप्रणम्याशेषपादाननुव्रज्यप्रदक्षिणीकृत्याभिवादयेत् ततःसव्यंकृत्वाॐदेवताभ्य
इतित्रिर्जपेत् ततोगृहंप्रविश्यसव्यापसव्याभ्यांदेवपितृश्राद्धदीपान्पाणिभ्यांनिर्वापयेत् ततःसव्येनपाणि
पादप्रक्षालनमाचमनंचकुर्यात् ततःॐप्रमादादित्यादिपठित्वा एतत्फलकामोविष्णुंस्मरेत् अपरश्राद्धचतुष्टय
द्रव्यप्रतिपत्तिंब्राह्मणायकुर्यात पिण्डान्जलेप्रतिपादयेत उच्छिष्टमार्ज्जनंकुर्यात् वैश्वदेवबल्यनंतरंदशप्रभृ
तिश्रोत्रियान् यथाशक्तिभोजयेत् ज्ञातिभिर्मिलित्वासहभोजयेत् इतिश्राद्धविवेकेसपिंडनपद्धतिः सपिंडीक एम·
रणकालव्यवस्थायामपिवत्सराभ्यंतरेचैतानिषोडशश्राद्धानिकेनचिद्विस्मरणादिनाऽकृतानितेन कृष्णैकादश्यांत ६१

न्मताहेवाषोडशश्राद्धानिकर्तव्यानीतिमिताक्षराश्राद्धपल्लवयोर्लिखितम् युक्तंचैतत् एकोद्दिष्टरूपश्राद्धस्यकालैका
दश्यांविधानात् एषांचैकोद्दिष्टरूपत्वात् अथचाधिकारिणो कृतषोडशश्राद्धसंकल्पेसपिण्डनमकृत्वाविपन्नेकनि
ष्टेनावशिष्टश्राद्धानिकार्याणीति श्राद्धप्रदीपः एषुसर्वेषुप्रेतश्राद्धादिषुशेषान्नभोजनंनकर्तव्यम् यदाहदेवलः ए
कोद्दिष्टस्यशेषंतुब्राह्मणायसमुत्सृजेत् ततःपरंतुभुंजीतस्वयंमंगलभोजनम् अस्यार्थः प्रेतश्राद्धेश्राद्धार्थंयत्किं
चित्साधितमोदनादितत्सर्वंब्राह्मणायैवप्रतिपादयेत् नोद्धारयेत् स्वयंमंगलभोजनंकुर्यात् पृथक्पाकसाधितान्न
भोजनंकुर्यात् पृथक्पाकस्यमंगलस्वरूपत्वात् सपिण्डनेपितामहादिश्राद्धशेषान्नस्यैकपाकसाधितत्वात्प्रेत
श्राद्धशेषान्नत्वादेवत्यागः सपिण्डनानंतरंवर्षद्वयंयावत् श्राद्धदत्तशेषान्नस्यापिभोजनंनकर्तव्यम् तथाचश्रा
द्धान्नभोजननिषेधेशातातपः नवश्राद्धंग्रामयाजकान्नंसंग्रहभोजनम् नारीणांप्रथमेगर्भेभुक्त्वाचांद्रायणंच
रेत् चांद्रायणंनवश्राद्धेपराकोमासिकेमतः मासत्रयेतिकृच्छ्रःस्यात् षाण्मासेकृच्छ्रएवहि आब्दिके कृच्छ्रपादःस्या
देकाहःपुनराब्दिके अतऊर्द्ध्वंनदोषःस्यात् शंखस्यवचनंयथा अत्रनवश्राद्धमेकादशाहश्राद्धम् ग्रामयाजकान्नंप्र
सिद्धमेवसंग्रहभोजनंचंद्रसूर्योपरागकालेभोजनम् नारीणांप्रथमगर्भसंस्कारभोजनम् आब्दिकेप्रथम[illegible]वत्स

श्रा॰ रिके पुनराब्दिके द्वितीयसांवत्सरिके तदुपकरणावस्त्रादिग्रहणं वर्षद्वयेपि कुर्वंतीति समाचारः स्त्रीशूद्रकर्तृकेऽपि श्रा
६२ द्धे स्वधास्थानेन नमः पदप्रयोगः कर्तव्यः स्त्रियः सपिंडने जीवति पत्योश्वश्र्वादिभिः सपिंडनं कार्यम् मृते पत्यौ पतिश्वशु
रादिभिः सह मेलनं कार्यम् पतिपुत्ररहितायाः सपिंडनमेव निषिद्धम् तथा च मार्कंडेयपुराणे सपिंडीकरणं ता
सां पुत्राभावेन विद्यते अत्र पुत्राभाव इत्युपलक्षणम् पतिपुत्राभावे इति द्रष्टव्यम् पतिकर्तृकस्य स्त्रीसपिंडनस्य विधा
नात् एवं सपत्नीपुत्रे विद्यमाने स्त्रियः सपिंडनं भवति बह्वीनामेकपत्नीनां यद्येका पुत्रिणी भवेत् सर्वास्तेनैव
पुत्रेण पुत्रिण्यो मनुरब्रवीत् इति सपत्नीपुत्रवत्याः पुत्रिणीत्वातिदेशेनापुत्रत्वाभावात् एवं त्रैवर्णिकजातस्य
शूद्रस्य सपिंडनं निषिद्धम् नोयते तु सपिंडत्वं येषां शूद्रकुलोद्भवे सर्वे शूद्रत्वमायांति यदि स्वर्गजितोपि ते इति शंखलि
खितवाक्यात् यत्र च सपिंडनं निषिद्धं तत्र ब्रह्मपुराणोक्तषोडशश्राद्धैः प्रेतत्वविमुक्तिः तथा च ब्रह्मपुराणे नृणां तु
त्यक्तदेहानां श्राद्धाः षोडशसंख्यया चतुर्थे पंचमे चैव नवमैकादशे तथा ततो द्वादशभिर्मासैः श्राद्धं द्वादशसंख्य
या कर्तव्यं प्रभुविभिस्तेषां ततो विप्रांश्च भोजयेदिति अत्र च मृतकार्येषु मरणादिनावधिकदिनमासादिगणनाच्चतु एम॰
र्थदिनादित्वं मरणादिनावधिकमेव ज्ञेयम् तथा चाशौचाभ्यंतरेपि चतुर्थदिनादिषु श्राद्धं कर्तव्यं अत्र च वर्षयाव ६२

त्सपिंडनकालेषुनिषिद्धनक्षत्रसंभवेनिषिद्धनक्षत्रेसपिंडननिषेधात् तत्रापिब्रह्मपुराणीयषोडशश्राद्धानिकर्त्तव्या
नीतिवहुषुनिवंधेषुलिखितम् लोकास्तुनिषिद्धनक्षत्रेपिसपिंडनकरणेपित्रादिगतकुलदोषाभावात्स्वमात्रगता
निष्टसंभवान्नक्षत्रानुरोधंनाचरंति अत्रवीरायाःसपिंडकर्तृकषोडशश्राद्धविधिर्लिख्यते तत्रसपिंडेनाशौचान्
तएव चतुर्थदिनेश्राद्धंकर्त्तव्यम् तत्रप्रथमतोस्थिसंचयनिमित्तकमेकोद्दिष्टंकृत्वाऽस्थिसंचयेकृतेपुनःस्ना
त्वा श्राद्धंकर्त्तव्यम् तत्रमध्यान्हेशुचिराचांतोयजमानसवर्णनाहूतंब्राह्मणंस्नातमाचांतंगोमयोपलिप्तायांमंडपा
द्बहिः भूमौगोमूत्रेणापसव्यवत्कृतंमंडलायाम् ॐभूम्यैनमइतित्रिरक्षतपुष्पपूजितायामास्तत्तदक्षिणायकु
शत्रयायांतिष्ठन्स्वागतमितिपृच्छेत् ॐसुस्वागतमितितेनोक्तेउभावप्युपविशतः ततःपुरकेजलंकृत्वाॐइदंते
पाद्यमित्युपनीयपात्रंब्राह्मणपादयोर्दद्यात् ततोऽपसव्यंकृत्वा पुष्पचंदनंतांबूलानिब्राह्मणायदत्वा ब्राह्मण
दक्षिणजानुदक्षिणकरेणास्पृश्य ॐअद्यामुकगोत्रायाःसपिण्डायाअमुकप्रेतायाश्चतुर्थदिनश्राद्धकरणायभवं
तंब्राह्मणमहमामंत्रये ॐआमंत्रितोस्मीतिप्रतिवचनम् ॐअक्रोधनैरित्यादिना ॐसर्वायासविनिर्मु[illegible]त्या
दिनाचनियमान्श्रावयेत् ॐभविनक्ष्यमिति [illegible]केजलतिलगंधपुष्पाणिपुरकेकृत्वा ॐअद्यामुक[illegible]

श्रा ऽमुकप्रेतेचतुर्थदिनश्राद्धएषपादार्घस्तेमयादीयतेतवोपतिष्ठतामितिमोदकादिनापादार्घंदद्यात् ततआचमनीय
६३ जलेनमस्कृत्यजानुनिविश्याम्य ओंइदंतेआचमनीयमित्याचमनीयंसमर्पयेत् ततःसव्येनस्वयमाचम्यतम्‌वमः
प्याग्रेकृत्वाश्राद्धदेशमागच्छेत् तत्रप्राङ्मुखउपविशेत् ओंसिद्धमितिवदेत् तत्रासनेऽत्रास्वेतिब्राह्मणमंगुष्ठेनगृ
हीत्वासकुशेआसनेउत्तराभिमुखमुपवेशयेत् पादयोस्तलेदक्षिणाग्रंकुशत्रयंदद्यात् आसनसमीपेतुतिल
तैलेनरक्षादीपंस्थापयेत् ततः ओं अपवित्रइत्यादिपठित्वा ओंपुंडरीकाक्षःपुनात्वितिकुशत्रयजलेनसर्वाणि
श्राद्धीयद्रव्याणिसिंचयेत् ततःकुशत्रयतिलजलान्यादाय ओंअद्यामुकगोत्रायाःसपिंडायाअमुकप्रेतायाः प्रे
तत्वविमुक्तिकामअद्यादियथाकालंषोडशश्राद्धान्यहंकरिष्येइतिसंकल्पयेत्पुनःकुशत्रयतिलजलान्यादाय
ओंअद्यामुकगोत्रायाःसपिण्डायाअमुकप्रेतायाःप्रेतत्वविमुक्तिहेतुषोडशश्राद्धांतर्गतचतुर्थदिन श्राद्धमहंक
रिष्येइतिवदेत् ओंकुरुष्वेतिप्रतिवचनं ओंगायत्रीजपमहंकरिष्येइति ओंकुरुष्वेतितत्प्रतिवचनम् ततःसप्रणव
व्याहृतिगायत्रींत्रिर्जपित्वा ओंदेवताभ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वा मोदकादीन्यादाय ओंअद्यामुकगोत्रेस राम
पिण्डेअमुकप्रेतेचतुर्थदिनश्राद्धइदमासनंतेमयादीयतेतवोपतिष्ठतामित्यासनमुत्सृजेत् ततओंअपहताइत्यादि ६३

नाम्श्राद्धदेशेवामावर्जेनतिलान् विकिरेत् ततआयंतुनइतिमंत्रंजपेत् ततोऽर्घपात्रे पवित्रंकृत्वा ओं शन्नोदेवीरितिजलंक्षि ज
लं तिलोसीति स्वाहांते नतिलान् क्षिप्त्वा तूष्णीं गंधपुष्पे क्षिपेत् ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रंब्राह्मणकरे उत्तराग्रं
धृत्वा तदुपरि उदकांतरं दत्वा ओं यादिव्या इतिपठित्वा मोटकादीन्यादाय ओं अद्यामुकगोत्रे सपिण्डेऽमुकप्रेतेच्चतुर्थ
दिन श्राद्धएषहस्तार्घस्तेमयादीयतेतवोपतिष्ठतामिति विप्रकरेऽर्घजलं ददत् उत्सृजेत् ततस्तदर्घपात्रं पवित्रस
हितंब्राह्मणवामपार्श्वे ओं सपिण्डये स्थानमसीतिन्युब्जीकरणम् ततोमोटकादीन्यादीय ओं अद्यामुकगोत्रे सपि
ण्डेऽमुकप्रेतेच्चतुर्थदिनश्राद्धे एतानिगंधपुष्पधूपदीपतांबूलसिंदूरवासांसितेमयादीयंतेतवोपतिष्ठंतामिति गं
धादीनुत्सृजेत् ततः पात्रस्यचतुर्दिक्षु चतुष्कोणंमंडलंकुर्यात्ततः श्राद्धीपान्नव्यंजनाग्रभागंगृहीत्वा घृततिलजल
सहितंतदन्नं ओं इदमन्नमेतद्भूस्वामिपितृभ्योनमइतिमोटकादिनादद्यात् ततः कराभ्यांताम्रपात्रमादायतेनान्नं
गृहीत्वामनाक्स्थित्वासपिंडांध्यात्वा भोजनपात्रपुरुषतृप्तिक्षमनमन्नंपरिविष्यात् पुटकांतरेषुव्यंजनानिघृतं
जलंचोपनीयअन्नोपरिपुटकादिनाहस्ताभ्यांमधुदद्यात् ओं मधुवाताऋतायतेइतिऋचं मधुमधुमध्विति च
जपेत् ततोऽन्यासानुत्तानपाणिभ्यामन्नपात्रमालभ्य ओं पृथिवीतेपात्रमित्यादिजपित्वा ओं इदंविष्णुरितिप्रऽन्नमृ

श्रा० तद्रूपतपात्रं विचिंत्य ओं कृष्णकव्यमिदमिति पठित्वा ओं इदमन्नं ओं इमा आपः॥ ओं इदमाज्यं ओं इदं हविरिति पात्रं ब्रा
६४ ह्मणाद्दक्षिणहस्तांगुष्ठमन्नजलघृतान्नेषु निवेश्य ओं अपहता इत्यादिनान्नोपरि बहून् तिलान्विकीर्य वामेन पा
णिना पात्रमत्यजन् ओं अद्यामुकगोत्रे सपिण्डोऽमुकप्रेते चतुर्थदिनश्राद्ध इदमन्नं सोपकरणं ते मया दीयते तवो
पतिष्ठतामित्यन्नमुत्सृजेत् ओं भवान्माशयत्विति ब्राह्मणाय जलगंडूषं दद्यात् ततो गायत्रीं मधुवाता इत्यादि ऋचं
ओं मधु मधु मध्विति च जपित्वा ओं अन्नहीनमित्यादि पठित्वा ओं यथासुखं जुषस्वेति ब्राह्मणं ब्रूयात् ब्राह्मणो वामेन
पाणिना पात्रमत्यजन् ओंकारपूर्वं भुंजीत त्वराक्रोधादिकं वर्जयेत् व्यंजनाद्यर्थं हस्तादिना संज्ञामपि न कुर्यात् श्रा
द्धकर्त्ता दर्भेष्वासीनो गायत्रीं मधुवातादिकं जपेत् ब्राह्मणं गायत्रीमनुश्रावयेत् ओं कृणुष्व पाज इत्यादि रक्षोघ्नमं
त्रान् पठेत् भूमौ तिलान् विकीर्य ब्राह्मणं सपिंडरूपत्तया ध्यायेत् ओं उदीरतामित्यादिमंत्रान् ओं सहस्रशीर्षा इ
त्यादि पुरुषसूक्तं ओं आशुः शिशान इत्यादिकमप्रतिरथमन्यानि च शतरुद्रीय रुद्रीय रुचिस्तव प्रभृतीनि पवित्रा
णि जपेत् ततः ओं नमस्तुभ्यं विरूपाक्षेत्यादि श्लोकमपि पठेत् वीणादिभिः ब्राह्मणं हर्षयेत् व्यंजनगुणानुत्कीर्त्तय राम०
न् मंदं मंदमुपनयन् ब्राह्मणं भोजयेत् ततस्तं तृप्तं ज्ञात्वा उच्छिष्टसन्निधावस्तरत् दक्षिणाग्रकुशत्रयोपरि भूमिं प्रोक्ष्य मधु ६४

तिलघृतेऽभ्यंजनयुतमभ्यंजलेनाज्ञाप्य ॐ अनग्निदग्धाइतिमंत्रेण कुशोपरि अन्नं विकिरेत् ततः सव्यं कृत्वाचम्य विष्णुं
स्मरेत् अपसव्यं कृत्वा दद्तेभस्यपोशानमिति जलं गंडूषं ब्राह्मणाय दत्वा ॐ स्वदितमिति पृच्छेत् ॐ सुस्वदितमिति
नोक्ते ॐ पिंडमहं करिष्ये इति पृच्छेत् ॐ कुरुष्वेत्यनुज्ञातो हस्तमात्रपरिमितां पिंडिकां मृत्तिकामयीं निर्माय तन्मध्ये प्रा
देशमितां रेखां वामेन पाणिना दर्भपिंजलीमादाय हस्ताभ्यां गृहीत्वा तन्मूलेन दक्षिणाग्रे रेखां कुर्यात् दर्भपिंजलीमु
त्तरस्यां दिशि क्षिपेत् ये रूपाणीति तत्रांगारभ्रामणं कृत्वांगारं दक्षिणस्यां दिशि क्षिपेत् रेखोपरि उपमूलसकृल्लू
नान् कुशान्दक्षिणाग्रानास्तीर्य सव्यं कृत्वा ॐ देवताभ्य इति त्रिर्जपेत् अपसव्यं कृत्वा जलतिलगंधपुष्पाणि पुट
के कृत्वा वामहस्तेन तमादाय दक्षिणहस्तेन मोटकादीन्यादाय ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्रा
द्धे पिंडस्थानेऽवनेनिक्ष्व ते मयादीयते तेन वोपतिष्ठतामिति कुशमध्येऽवनेजनं दद्यात् ततो मोटकादीन्यादाय
पिंडं चादाय ॐ अद्यामुकगोत्रे सपिंडेऽमुकप्रेते चतुर्थदिनश्राद्धे एष पिण्डस्ते मयादीयते तेन वोपतिष्ठतामिति कुश
मध्ये पिण्डं दद्यात् तत आस्तृतकुशमूले करं मोक्ष्य सव्यं कृत्वाचम्य हरिं स्मृत्वा ॐ अत्र सपिंडे मादयस्व यथाभागम
वृषायस्वेति दक्षिणामुखः पठेत् तत उदङ्मुखीभूय श्वासं नियम्य भास्वरमूर्तिं ध्यायन् ॐ अमीमदंत सपिंडे यथाभ

श्रा· भागमान्नृषायिष्टेतिपठन् मुखंप्रत्यावर्तयेत् मोदकादीन्यादायवामहस्तेऽवनेजनपुटकंधृत्वा ओंअद्यामुकगोत्रेसपिण्डे
६५ ऽमुकप्रेतेचतुर्थदिनश्राद्धेऽत्रप्रत्यवनेनिक्ष्वतेमयादीयतेतवोपतिष्ठतामितिपिंडोपरिप्रत्यवनेजनंदद्यात् ततोनी
वींविस्रस्यपरिधायसव्यंकृत्वाचामेत् अपसव्यंकृत्वावामेनपाणिनोद्धृतंसूत्रंदक्षिणेनादाय ओंएतत्तेसपिंडेवा
सइतिपिंडोपरिहस्ताभ्यांदद्यात् मोदकादीन्यादाय ओंअद्यामुकगोत्रेसपिंडेऽमुकप्रेतेचतुर्थदिनश्राद्धपिंडेएत
द्वासस्तेमयादीयतेतवोपतिष्ठतामित्युत्सृजेत् ततोगंधपुष्पधूपदीपतांबूलैःपिंडमर्चयेत् पिण्डशेषान्नंपिंडस
मीपेविकिरेत् ओंशिवाआपःसंत्विति आचांतेब्राह्मणकरेजलदानं ओंसंत्वितिप्रतिवचनम् ओंसौमनस्यमस्त्वि
तिपुष्पम् ओंअस्त्वितिप्रतिवचनम् ओंअक्षतंचारिष्टमस्त्वितितंडुलदानं ओंअस्त्वितिप्रतिवचनं मोदकादीन्यादा
य ओंअद्यामुकगोत्रायाःसपिण्डाया अमुकप्रेतायाश्चतुर्थदिनश्राद्धेदत्तैतदन्नपानादिकमुपतिष्ठतामित्यक्षय्योदक
दानंब्राह्मणकरेदद्यात् ओंउपतिष्ठतामितिप्रतिवचनम् ततःसव्यंकृत्वासुमनास्तन्मनादक्षिणांदिशंपश्यन् ओंअ
घोराःसपिंडास्त्वितिपूर्वाग्रांजलधारांदद्यात् ओंअस्त्वितिप्रतिवचनम् पूर्वाभिमुखोभूत्वा ओंगोत्रंनोवर्द्धतामित्याभ राम·
शिषंब्राह्मणांयाचेत् ओंवर्द्धतामितितेनोक्ते ओंदातारोनोभिवर्द्धतामित्यादिनाशीःप्रार्थनं ओंसंत्वितिप्रतिवचनं अप ६५

सव्यंकृत्वा पिंडोपरि सपवित्रकुशानास्तीर्य दक्षिणाग्रान् ॐनमो वचयिष्ये इति ब्राह्मणं ब्रूयात् ॐ वाच्यतामित्युक्ते ॐ वा वाँ
गड्डायै नमः उच्यतामिति वदेत् ॐ अस्तु नम इत्युक्ते पुटकादिस्थितं जलं हस्ताभ्यामादाय ॐ ऊर्ज्जं वहन्तीरिति मंत्रेण
सपवित्रकुशोपरि दक्षिणाग्र वारिधारां दद्यात् ततो नम्रीभूय पिंडमाघ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकं च व
न्हौ निःक्षिपेत् अर्घपात्रमुत्तानीकृत्य ततो मोटकादिकं दक्षिणाद्रव्यं वादाय ॐ अद्यामुकगोत्रायाः सपिंडायाः
अमुकप्रेतायाः कृते तच्चतुर्थदिन श्राद्ध प्रतिष्ठार्थमिदं रजतं चद्रव्यं दैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय द
क्षिणां तुभ्यमहं संप्रददे इति दद्यात् ॐ निरीक्षारं स्वस्ति ब्रूहीति ब्राह्मणं वदेत् स्वस्तीति ब्राह्मणेनोक्ते स्वस्त्यस्तु इत्यु
क्त्वा ब्राह्मणहस्तांगुष्ठं गृहीत्वोत्थापयेत् तं गृहीत्वा जलपात्रं च गृहीत्वा निमन्त्रणस्थाने स्थापयेत् ॐ आमावाज
स्य प्रसवो जेगम्यादेमे द्यावापृथिवी विश्वरूपे आमागंतां पितरा मातरा चामा सोमो अमृतत्वेन गम्यादिति मंत्रे
णवारिधारया ब्राह्मणं त्रिर्वेष्टयेत् प्रणम्याष्टोपादाननुव्रज्य प्रदक्षिणीकृत्य नमस्कुर्यात् तत उपविश्य तन्त्रं वस
वंदेवताभ्य इति त्रिर्जपेत् ततः श्राद्धदेशमागत्य पाणिभ्यां दीपं निर्वाप्य सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य त
दंतेप्रमादादित्यादि पठित्वा श्राद्ध पूर्वकामो विष्णुं स्मरेत् पिण्डादिकं जले क्षिपेत् उच्छिष्टापनयनं कुर्यात् दक्षप्र

श्रा· भृति श्रोत्रियान् भोजयेत् बंधुभिर्मिलित्वा स्वयं भुंजीत् अनेनैव प्रकारेण पंचमदिने पंचमदिन श्राद्धं नवमदिने नवमदि
६६ न श्राद्धं एकादशाहे एकादशदिन श्राद्धं कुर्यात् चतुर्थदिने विगोत्रो यदि श्राद्धकर्त्ता तदा तस्याशौचांत द्वितीयदिनत्वात् तत्र श
य्यादानकांचनपुरुषदानदंपतिपूजनवृषोत्सर्गकपिलादानानि कुर्यात् सपिंडो यदि श्राद्धकर्त्ता तदा तस्याशौचांत द्वि
तीयदिने शय्यादानदंपतिपूजनवृषोत्सर्गादिकं च कर्त्तव्यं भवतीति अनेनैव प्रकारेण प्रथममासमारभ्य द्वादश
मासपर्यंतं प्रतिमासशेषे सति क्षयाहे प्रथममासिक द्वितीयमासिक तृतीयमासिक चतुर्थमासिक पंचममासि
क षष्ठमासिक सप्तममासिकाष्टममासिक नवममासिक दशममासिकैकादशमासिक द्वादशमासिकानि कर्त्तव्या
नीति अधिकमाससंभवे त्रयोदशमासिकानि कर्त्तव्यानि अस्मिन् ब्रह्मपुराणोपकल्पे मासिकानामपकृष्यकरणं
न भवति प्रमाणाभावादिति इति श्राद्धविवेके मध्यक्रियापरिच्छेदस्तृतीयः ३ अथ पार्वणैकोद्दिष्टश्राद्धप्रयोगः त
त्र पूर्वदिने कृतनियमः श्राद्धदिने प्रातर्वस्त्रयुग्मेन कृतस्नानः पंचगव्योपलेपनज्वलदंगारभ्रामणगोरमृत्तिकाच्छा
दनैः श्राद्धभूमिसंस्कारं कृत्वा वस्त्रादिना वेष्टयित्वा तिलगौरसर्षपैरवकीर्य पित्रासनस्थानाद्वामभागे श्राद्धदेयवस्तू राम·
न्यासाद्य कृतस्नानादिर्मध्याह्ने शुचिः शुचिः शुक्लद्विवासाः पादौ प्रक्षाल्याचम्य श्राद्धदेशमागच्छेत् तत्र स्वयं पाककु ६६

पीत् सपिण्डस्त्रीद्वारावापाचयेत् ततः पाकंअन्नेरक्षादीपंनिधाय पुनराचम्यप्राङ्मुखउपविशेत् अन्यकृतेपाकेसिद्धभि
तिएष्टुा ॐ अपवित्रः पवित्रोवेत्यादि ॐ पुंडरीकाक्षः पुनात्वितिपठित्वाकुशत्रयजलैः श्राद्धवस्तून्यभिषिंचेत् ततःकु
शत्रयतिलजलान्यादाय ॐ अद्यामुकमासीयामुकपक्षीयामुकतिथौ अमुकगोत्रस्यपितुरमुकशर्मणः सांवत्स
रिकैकोद्दिष्टश्राद्धमहं करिष्ये इतिसंकल्पंकुर्यात् ततोगायत्रींत्रिर्जपित्वा ॐ देवताभ्यइत्यादित्रिर्जपेत् ततोऽपस
व्यंकृत्वादक्षिणामुखः पातितवामजानुः मोटकादीन्यादाय ॐ अद्यामुकगोत्रस्यपितरमुकशर्मणःसांवत्सरिकैकोद्दि
ष्टश्राद्धइदमासनंतेस्वधेति पूर्वोपकल्पितंमोटकरूपमासनंतिलजलप्रोक्षितंदक्षिणाग्रेपितृतीर्थेनोत्सृजेत्
ॐ अपहतेत्यादिनाभोजनपात्रेतिलान्विकीर्य ॐ आयंतुनइत्यादिपठित्वा ततोऽर्घकरणम् पुटकादौदक्षिणा
ग्रंपवित्रंधृत्वा ॐ शन्नोदेवीरितिमंत्रेणजलंप्रक्षिप्य ॐ तिलोसीतितिलान्प्रक्षिप्य गंधपुष्पेतूष्णींक्षिपेत् त
तोऽर्घपात्रंवामहस्तेकृत्वा भोजनपात्रेपवित्रमुत्तराग्रंधृत्वा तदुपरिउदकान्तरंदत्वा ॐ यादिव्याइतिपठित्वा ॐ
अद्यामुकगोत्रपितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धएषहस्तार्घः स्वधेतिपवित्रोपरिजलंयथापतितमेवमुत्सृ
जेत् ततः पवित्रयुतंतदर्घपात्रमवशिष्टजलयुतमेवासनवामभागे ॐ पितृभ्यःस्थानमसीतिन्युब्जीकुर्यात् दक्षिणा

श्रा॰ दानपर्यन्तंनोद्धरेत्‌ नचालयेत्‌ ततोगंधादिदद्यात्‌ ततोमोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकशर्मन्‌
६७ सांवत्सरिकैकोद्दिष्टश्राद्धेएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेस्वधेतिगंधादीन्‌दद्यात्‌ ततोजले
नभोजनपात्रासनयोश्चतुर्दिक्षुमंडलंकृत्वा सव्यंजनंसघृततिलजलमन्नंकिंचिदग्रभागमुद्धृत्यमोटकादिना
ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमः इतिभूस्वामिनेऽन्नंदद्यात्‌ ततःसिद्धमुष्णमन्नंरजतादिपात्रस्थंकराभ्यामा
दायपक्षितरंध्यायन्‌ मंदंमंदपरिवेषणंकुर्यात्‌ ततःपुरुषाहारक्षममन्नंपरिविष्ययथासंभवंव्यंजनंलेघृतंचपात्रां
तरस्थांतत्रोपनीय अन्नंमधुनाभिघार्य ॐमधुवातेत्यादिऋचंमधुमधुमध्विितिचजपित्वापात्रमालभेत्‌ ततःसव्ये
नहस्तेनपात्रंपश्चिमभागेस्पृशन्‌ तदुपरिगतदक्षिणहस्तेनाधोमुखेन पूर्वभागेपात्रंस्पृशन्‌ ॐपृथिवीतेपात्र
मित्यादि ॐइदंविष्णुरित्यादि ॐकृष्णकव्यमिदंरक्षमदीयमितिपठित्वावामेनपाणिनापात्रंस्पृशन्नेवदक्षिणं
पाणिमुद्धृत्य ॐइदमन्नंॐइदमाज्यंॐइदंकविरित्यन्नेजलेघृतेपुनरन्नेचांगुष्ठंनिक्षिप्य ॐअपहतेत्यादिना
न्नोपरितिलान्विकीर्यमोटकतिलजलान्यादाय ॐअद्यामुकगोत्रायपित्रेऽमुकशर्मणेसांवत्सरिकैकोद्दिष्ट राम॰
श्राद्धेएतत्तेऽन्नंसोपकरणंस्वधेत्युत्सृजेत्‌ ततोवामहस्तमप्युद्धृत्य ॐअन्नहीनमित्यादिपठित्वा ॐगायत्रींत्रिः ६०

जपेत् कुशेषूपविश्य ओंमधुवातेत्यादिजपेत् ततः कृणुष्वपाजइत्याद्यारक्षोघ्नीश्चोजपित्वाभूमौतिलान् विकीर्य
पितरं ध्यात्वा उदीरतामवरइत्यादिपितृमंत्रान् सहस्रशीर्षाइत्यादिपुरुषसूक्तम् ओंआशुःशिशानइत्यादिक
मप्रतिरथंचजपेत् यथाशक्त्यन्यान्यपिपवित्राणिजपेत् रुचिस्तवादीनिचजपेत् ओंनमस्तुभ्यंविरूपाक्षन
मस्तेनेकचक्षुषेनमःपिनाकहस्तायवज्रहस्तायवैनमइतिपठित्वा उच्छिष्टसमीपेदक्षिणाग्रंकुशत्रयमास्ती
र्यजलेनसिक्त्वा किंचिदन्नंसघृततिलंजलसिक्तमादाय ओंअनग्निदग्धाइत्यादिमंत्रस्यफलमुद्दिश्यकुशो
परि अन्नंविकिरेत् ततःसव्यंकृत्वाऽऽचम्यहरिंस्मृत्वागायत्रींमधुवाताइत्यादिकंमधुमधुमध्वितिचजपेत् त
तोऽपसव्यंकृत्वाहस्तमात्रचतुरंगुलोच्छ्रितदक्षिणाप्लवपिण्डिकायांप्रादेशमात्र दर्भपिंजल्यादक्षिणांगुष्ठत
र्जनीधृतमूलयावामहस्तांगुष्ठतर्जनीधृतापरिभागया ओंअपहताऽअसुरारक्षाँसिवेदिषदइतिप्रादेश
मात्रमुल्लिख्यदर्भपिंजलीमुत्तरस्यांदिशित्यजेत् ओंयेरूपाणीत्यादिनांगारंभ्रामयित्वाअंगारंदक्षिणस्यांक्षि
पेत् ततस्तत्रछिन्नमूलकुशत्रयमास्तीर्यसव्यंकृत्वा देवताभ्यइतित्रिर्जपेत् ततोऽपसव्यंकृत्वातिलजल
गंधपुष्पाणिपुटकेकृत्वापुटकंवामहस्तेधृत्वामोटकतिलजलान्यादाय ओंअद्यामुकगोत्रपितरमुकशर्मन्

श्रा सांवत्सरिकैकोद्दिष्टश्राद्धपिंडस्थानेऽत्रावनेनिक्ष्वते स्वधेति छिन्नमूलकुशोपरि अवनेजनं दद्यात् किंचिज्जलं पुटके
६८ ऽवशेषयेत् ततः तिलजलव्यंजनघृतमिश्रैरन्नैः पिंडं बिल्वोपमं निर्माय मधुघृताभ्यामभिधार्य्य मोटकतिलजल
सहितमादाय सव्योपगृहीतदक्षिणहस्तेन ॐ अद्यामुकगोत्रपितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे एष ते पि
ण्डः स्वधेति छिन्नमूलकुशोपरि पिंडं दद्यात् ततः कुशमूले तूष्णीं करं प्रोक्ष्य सव्यं कृत्वा द्विराचामेत् हरिं स्मृत्वा अ
पसव्यं कृत्वा दक्षिणामुखः ॐ अत्र पितर्मादयस्व यथाभागमावृषायस्वेति पठित्वा उत्तराभिमुखो भूय श्वासं नियम्य
पितरं ध्यायन् पुनर्दक्षिणाभिमुखो भवन् ॐ अमीमदन्त पितर्यथाभागमावृषायिष्टेति पठेत् ततः पूर्वदत्तावशि
ष्टजलयुतप्रत्यवनेजनजलपात्रमादाय ॐ अद्यामुकगोत्रपितरमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिंडेऽत्र प्र
त्यवनेनिक्ष्वते स्वधेति पिंडोपरि प्रत्यवनेजनं दद्यात् ततो नीवीं विस्रंस्य सव्येनाचम्यापसव्यं कृत्वा वामेन पाणि
ना सूत्रमादाय दक्षिणकरेण धृत्वा ॐ नमस्ते पितारसाय नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्ते पितः
स्वधायै नमस्ते पितर्घोराय नमस्ते पितर्मन्यवे नमस्ते पितः पितर्नमस्ते गृहान्नः पितर्देहि सतस्ते पितर्देष्म इति पठि राम
त्वा ॐ एतत्ते पितर्वास इति पिंडोपरि सूत्रं दद्यात् ततो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकश ६८

र्म्मन् सांवत्सरिके कोद्दिष्टश्राद्धे पिण्डे एतत्ते वासः स्वधेति सूत्रमुत्सृजेत् ततः पितरमुद्दिश्य पिण्डे तूष्णीं गंधपुष्पधूपदी
पतांबूलानि दद्यात् ततः शिवा आपः संत्विति जलम् ॐ सौमनस्यमस्त्विति पुष्पं ॐ अक्षतं वारिष्टमस्त्विति तंडुला
न् भोजनपात्रे क्षिपेत् ततश्च मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः सांवत्सरिकैकोद्दि
ष्टश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकं दद्यात् ततः सव्यं कृत्वा दक्षिणामुखः ॐ अघोरः
पितास्त्विति पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् ततः पूर्वाभिमुखः कृतांजलिः सुमनाः ॐ गोत्रं नो वर्द्धतां दातारो नो
भिवर्द्धन्तां वेदाः संततिरेव च श्रद्धा च नो मा व्यगमद्बहु देयं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचि
तारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आशिषः संतु इत्याशीः प्रार्थनं कृत्वा अपसव्यं कृत्वा सपवित्रकु
शत्रयं दक्षिणाग्रं पिंडोपरि धृत्वा ॐ ऊर्ज्जं वहन्तीरमृतमिति मंत्रेण कुशोपरि दक्षिणाग्रां जलधारां दद्यात्ततो नम्री
भूय पिण्डमाघ्राय योस्थापयेत् पिण्डाधारकुशानुल्मुकं च वन्हौ क्षिपेत् अर्घपात्रमुत्तानीकृत्य दक्षिणां दद्यात् त
द्यथा मोटकादीन्यादाय रजतं ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थमि
दं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे यद्युपस्थितं रजतं न भवति तदा रक्तिकामितं

श्रा· रजतेचंद्रदेवतमित्येवमादिवाक्यंकर्तव्यं इदंपदंनदातव्यमितिविशेषः ततःॐअभिरम्यतामितिविसर्जनम्
६९ ततःसव्यंकृत्वादेवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच·नमःस्वाहायैस्वधायैनित्यमेवनमोनमइतित्रिःपठेत
ततोऽपसव्यंकृत्वापाणिभ्यांदीपनिर्वापयेत् ततोहस्तौपादौप्रक्षाल्यसव्यंकृत्वाचम्य·ॐब्रह्मणेस्वाहा· ॐ
प्रजा·ॐगृह्याभ्यःस्वाहा·ॐकश्यपायस्वाहा·ॐ अनुमतयेस्वाहा·ततोहुतशेषान्नेनबलिदानं ॐपर्ज्जन्याय
नमः·ॐअद्भ्योनमः·पृथिव्यैनमः· उदकुंभस्थायेनमः· विधात्रेनमः· द्वार्य्ययोः वायवेनमःइतिप्रतिदिशं· ॐप्राच्यै
नमः·ॐअवाच्यैनमः·ॐप्रतीच्यैनमः·ॐउदीच्यैनमः·प्रति·ॐब्रह्मणेनमः·ॐअंतरिक्षायः सूर्य्याय· इतिमध्ये·
ॐविश्वेभ्योदेवेभ्योनमः·ॐविश्वेभ्योभूतेभ्योनमः·ॐउषसेनमः· ॐभूतानांपतयेनमः· इत्युत्तरोत्तरं ततःप्राचीना
वीती दक्षिणाभिमुखः पातितवामजानुः पितृतीर्थेन दक्षिणस्यांदिशि ॐपितृभ्यःस्वधानमः इतिदद्यात् ततोब
लिशेषान्नलिप्तपात्रंप्रक्षाल्य पश्चिमेतत्तेनिर्णेजनंनमः इतिवायव्यांदिशिदद्यात् देवामनुष्याःपशवोवयांसि
सिद्धाःसयक्षोरगदैत्यसंघाःप्रेताःपिशाचास्तरवःसमस्तायेचान्नमिच्छंतिमयाप्रदत्तम् पिपीलिकाःकीटपतं राम·
गकाद्याः बुभुक्षिताःकर्मनिबंधबद्धाःप्रयांतुतेतृप्तिमिदंमयान्नं तेभ्योविसृष्टंसुखिनोभवंतु येषांनमातानपिता ६९

नबंधुर्नचान्नसिद्धिर्नतथान्नमस्तितत्तृप्यन्तु भुविदत्तमेततेषांतु तृप्तिर्मुदिताभवंतु धांखः सौरभेय इतिगोभ्यस्तत
श्वानाविति शुनां इंद्रेति वायसानांचशानकेर्निर्तयेद्दुवितनोब्राह्मणान्भोजयेत् इतिनैमित्तिकश्राद्धवलिदानम्
ॐ प्रमादात्कुर्वतांकर्म्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोः संपूर्णंस्यादितिश्रुतिरितिपठित्वा श्राद्धसंपू
र्णकामोविष्णुंस्मरेत् श्राद्धीयवस्तूनिब्राह्मणायप्रतिपादयेत् अंभसिवाक्षिपेत् ततःशेषंज्ञातिभिः सहभुंजीत
एवमेवपितृव्यभ्रात्रादिश्राद्धप्रयोगःशास्त्रादिहतनिमित्तकमाभ्मिनकृष्णचतुर्दश्यामप्येकोद्दिष्टमेवकर्तव्यंतत्र
सांवत्सरिकपक्षेपरंनदातव्यमिति अथमातृश्राद्धप्रयोगः अथशुक्लांवरःस्नातोमध्याह्नेसुसमावृत्तेपंचगव्यो
पलेपितंज्वलदंगारशोधितंगौरमृतिकाच्छादितंयथाप्रदेशासादितश्राद्धीयद्रव्यंतंदेशमागत्यपादौप्रक्षाल्याचम्य
सपिराडस्त्रीद्वारापाचयेत्स्वयंवाप चेत् ततःपादौप्रक्षाल्याचम्यशुद्धासनेउपविश्यदीपंप्रज्वाल्ययित्वाचम्यश्रा
द्धशुद्धः परकर्तृकेपाकेसिद्धमितिपाचिकांस्पृष्ट्वा ॐ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवायःस्मरेत्पुंडरीकाक्षंस
वाह्याभ्यंतरःशुचिः ॐ पुंडरीकाक्षःपुनात्विति कुशत्रयजलैः श्राद्धीयद्रव्याणिसिंचयेत् ततःकुशत्रयतिलज
लान्यादाय ॐ अद्यामुकमासीयामुकपक्षीयामुकतिथावमुकगोत्रायामातुरमुकदेव्याःसांवत्सरिकैकोद्दिष्टश्राद्ध

श्रा० महंकरिष्ये इति संकल्पं कुर्य्यात् ततो गायत्रीं त्रिर्जपित्वा देवताभ्यस्त्रिर्जपेत् ततो यसव्यं कृत्वा पातित वामजानुर्दक्षि
७० णामुखो मोटक तिलजलान्यादाय ॐ अद्यामुकगोत्र यामातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्ध इदमासनं ते स्वधे
ति मोटकरूपमासनं दक्षिणाग्रं स तिलमुत्सृजेत् ततः ॐ अपहताऽ असुरा रक्षा ᳬ सि वेदिषदऽइ सन्न पात्रे वा मावर्त्ते
न तिलान्विकीर्य्य ॐ आयन्तु नः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञे स्वधया मदन्तोधिब्रु
वन्तु तेवन्त्वस्मानिति पठित्वा अर्घपात्रे दक्षिणाग्रम् पवित्रं धृत्वा ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये शं
य्योरभिस्रवन्तु नऽइति अर्घपात्रे जलं क्षिपेत् ॐ तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः प्रत्नमद्भिः पृक्तः स्वधया
पितॄल्लोकान्प्रीणाहि नः स्वाहेति तिलान् क्षिप्त्वा गंधपुष्पे तूष्णीं क्षिपेत् ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रं भोजन
पात्रोपरि उत्तराग्रं धृत्वा तदुपरि किंचिदुदकान्तरं दत्वा ॐ या दिव्याऽ आपः पयसा संबभूवुर्य्याऽ आन्तरिक्षाऽ उत पा
र्थिवीर्य्याहिरण्यवर्णा यज्ञियास्ता नऽ आपः शिवाः स ᳬ स्योनाः सुहवा भवन्तु इति पठित्वा मोटक तिलजलान्या
दाय ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्ध एषते हस्तार्घः स्वधेति अर्घं ददुत्सृजेत् ततोऽव राम०
शिष्टजलसहितं पवित्रसहितं चार्घपात्रमासनवामभागे ॐ मात्रे स्थानमसीति न्युब्जीकुर्य्यात् तत्र दक्षिणादानप ७०

यंत्ननोद्धरेत्ननचालयेत् ततोगंधादिदानम् ॐअद्यामुकगोत्रेमातरमुकदेवि सांवत्सरिकैकोदिष्टश्राद्ध एतानि गंधपु
ष्पधूपदीपतांबूलसिंदूरवासांसितेस्वधेति दद्यात् ततोजलेनासनसहितभोजनपात्रस्यचतुर्दिक्षुचतुष्कोणमंडलं
कृत्वा सव्यंजनश्राद्धदेयान्नाग्रभागंतिलजलसहितंकुत्रचित् पुटकादौकृत्वा ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमइति
मोदकादिनाभूस्वामिनेऽन्नमुत्सृजेत् ततःकराभ्यांताम्रपात्रस्थमन्नंमातरंध्यायन्भोजनपात्रे पुरुषाहारक्षमं परिवि
ष्य यथासंभवंसव्यंजनंघृतपानीयंचपात्रांतरेषूपनीयमधुनान्नमभिघारयेत् ततः ॐमधुवाताऋतायतेमधुक्षर
न्तिसिंधवः माध्वीर्नः सन्त्वोषधीः ॐमधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनःपिता मधुमान्नोवन
स्पतिर्मधुमाꣳ अस्तुसूर्य्यः माध्वीर्गावोभवन्तुनः ॐमधुमधुमध्वितिचजपेत् ततःपाणिभ्यांन्युब्जाभ्यांव्यस्ताभ्यां
पात्रंस्पृशन् ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा ॐइदंविष्णुर्विचक्रमेत्रे
धानिदधेपदम् समूढमस्यपाꣳसुरे ॐकृष्णकव्यमिदंरक्षमदीयमितिपठेत् ततोदक्षिणहस्तमुत्तानंतदंगुष्ठं ॐ
इदंमन्नमित्यन्ने ॐइमाआपइतिजले ॐइदमाज्यमितिघृते ॐइदंकविरितिपुनरन्नेनिवेशयेत् ॐअपहताऽ
असुरारक्षाꣳसिवेदिषदइत्यनेनतिलानक्षिपेत् ततोमोदकादीन्यादाय ॐअद्यामुकगोत्रायैमात्रेऽमुकदेव्यैसांवा

श्रा· त्सरिकैकोद्दिष्टश्राद्ध इदमन्नं सोपकरणं ते स्वधा इत्यन्नमुत्सृजेत् ततः पात्रं त्यजेत् ओं अन्नहीनं क्रियाहीनं विधिहीनं च
७१ यद्भवेत् तत्सर्वमच्छिद्रमस्त्विति पठित्वा गायत्रीं त्रिर्जपित्वा कुशोपूपविश्य ओं मधुव्वातेति जपेत् ततः कृणुष्व पाज इत्या
द्यारक्षोघ्नो मंत्रं चो जपेत् तिलान् भूमौ विकीर्य्य मातरं ध्यात्वा ओं उदीरतामवर इत्यादि पित्र्यमंत्रान् सहस्रशीर्षेत्यादि
पुरुषसूक्तम् ओं आशुः शिशान इत्यादिकमप्रतिरथं अन्यानि च मंत्राणि जपेत् तत उच्छिष्टसमीपे कुशत्रयमास्ती
र्य जलेन प्रोक्ष्य समंजनमन्नं सघृतं सतिलं जलप्रोक्षितमादाय ओं अनग्निदग्धा ये जीवा ये प्यदग्धाः कुले मम भूमौ
दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति कुशोपरि अन्नमुत्सृजेत् ततः सव्यं कृत्वा वम्हा हरिं स्मृत्वा गायत्रीं मधुव्वातेति च
जपेत् अपसव्यं कृत्वा वेदिकां कृत्वा पिण्डस्थाने प्रादेशमात्रे ओं अपहता असुरा रक्षांसि वेदिषद इति मंत्रेण दर्भपि
जल्या उल्लिखेत् दर्भपिंजलीमैशान्यां क्षिपेत् ततः ओं ये रूपाणि प्रतिमुञ्चमानाः असुराः सन्तः स्वधया चरन्ति परापु
रो न्यपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्यस्मादिति मंत्रेण रेखायामंगारं भ्रामयित्वा दक्षिणस्यां दिशि त्यजेत् ततस्त
त्रच्छिन्नमूलकुशानास्तीर्य्य सव्यं कृत्वा देवताभ्य इति त्रिर्जपेत् ततो ऽपसव्यं कृत्वा पुटके जलतिलपुष्पगंधान् कृत्वा श्राभ·
मोटकतिलजलान्यादाय ओं अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्धे पिण्डस्थाने ऽत्रावनेनिक्ष्व ते स्वधे ७१

त्तिच्छिन्नमूलकुशोपरि अवनेजनं दद्यात् ततस्तिलघृतसहितान्नेन पिण्डं कृत्वा मधुघृताभ्यामभिघार्य सोदकतिलजल
पिण्डानादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्ट श्राद्ध एष ते पिण्डः स्वधेति पिण्डं सव्योपगृहीतद
क्षिणहस्तेन कुशोपरि दद्यात् ततः कुशमूले करं प्रोक्ष्य सव्यं कृत्वा द्विराचम्य हरिं स्मृत्वा अपसव्यं कृत्वा दक्षिणामु
खः ॐ अत्र मातर्मादयस्व यथाभागमावृषायस्वेति पठेत् उदङ्मुखीभूय श्वासं मातरं धारयन् पराङ्मुखे मानः ॐ अ
मीमदन्त माता यथाभागमावृषायिष्टेति पठेत् ततोऽवनेजनावशिष्टजलसहितं पुटकमादाय सोदकतिल
न्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्टश्राद्ध पिण्डे प्रत्यवनेनिक्ष्व ते स्वधा इति प्रत्यवने
दद्यात् ततो नीवीं विस्रंस्य सव्यं कृत्वाचम्य अपसव्यं कृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणेन वादाय
मातारसाय नमस्ते मातः शोषाय नमस्ते मातर्जीवाय नमस्ते मातः स्वधायै नमस्ते मातर्घोराय नमस्ते मातर्मन्यवे नमस्ते मा
तर्मातर्नमस्ते गृहान्नो मातर्देहि सतस्ते मातर्देष्म इति पठित्वा एतन्ने मातर्वास इति मंत्रेण पिंडोपरि सूत्रं दत्वा सोदकति
लजलान्यादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि सांवत्सरिकैकोद्दिष्ट श्राद्ध पिण्डे एतत्ते वासः स्वधेति सूत्रमुत्सृज्य त
तः पिंडे गंधपुष्पधूपदीपताम्बूलानि तूष्णीं दत्वा ॐ शिवा आपः सन्त्विति जलं ॐ सौमनस्यमस्त्विति पुष्पम् ॐ अक्षतं च

श्रा· रिष्टमस्त्विति तंडुलान् भोजनपात्रे निक्षिपेत् ततो मोरकतिलजलान्यादाय ॐ अद्यामुकगोत्रा यामातुरमुकदेव्याः सां
७२ वत्सरिके कोद्दिष्टश्राद्धे दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकमुत्सृजेत् ततः सव्यं कृत्वा दक्षि
णामुखः ॐ अघोरमातास्त्विति पिंडोपरि पूर्वाग्रां जलधारां दद्यात् ततः पूर्वाभिमुखः कृतांजलिः ॐ गोत्रन्नो
वर्द्धतां दातारो नोभिवर्द्धताम् वेदाः संततिरेव च श्रद्धा च नो माव्यगमद्बहुदेयं च नोस्त्विति अन्नं च नो वहु भवेद
तिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आशिषः संत्वित्याशीः प्रार्थनं कुर्यात् ततो
ऽपसव्यं कृत्वा सपवित्रकुशात्रयं पिंडोपरि आस्तीर्य्य ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् स्वधास्थ
तर्प्पयत मे मातरमिति कुशोपरि दक्षिणाग्रां जलधारां दद्यात् ततो नम्री भूय पिंडमाघ्रायोत्थापयेत् पिंडाधार
कुशानुल्मुकं वन्हौ निक्षिप्यार्घपात्रमुत्तानीकृत्य दक्षिणां दद्यात् ततो मोरकतिलजलान्यादाय ॐ अद्यामुकगोत्रा
यामातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थं रक्तिकापरिमितं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणा
य दक्षिणां दातुमहमुत्सृजे इति यथावैभवं दद्यात् ॐ अभिरम्यतामिति विसर्ज्जनम् ततः सव्यं कृत्वा ॐ देवताभ्य राम
इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा हस्ताभ्यां दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्य सव्येनाचम्य प्रमादात्कुर्वतां कर्म प्रच्यवे ७२

ध्वरेषु यत्स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरित्युक्ता श्राद्ध संपूर्णकामो विष्णुं स्मरेत् ततः श्राद्धीयवस्तूतिब्रा
ह्मणाय प्रतिपादयेत् जलेवाक्षिपेत् तत इष्टैः सह शेषभोजनम् एवं पत्न्यादिश्राद्धं पत्न्यादिसंबंधिनाम्नोल्लेखे वि
शेषः शास्त्रादिहत निमित्तकेपि एकोद्दिष्ट एव प्रयोगः सांवत्सरिक पदं तत्र न दातव्यम् सद्यथा आश्विनकृष्ण चतुर्दश्यां
लिथावमुकगोत्रायामातुरमुकदेव्या एकोद्दिष्ट श्राद्धमहं करिष्य इति संकल्पं कुर्यात् ॐ अद्यामुकगोत्रे मातरमुकदे
वि एकोद्दिष्ट श्राद्ध इदमासनं ते स्वधा इत्येवमाद्युत्सर्गवाक्यम् इत्येकोद्दिष्ट प्रयोगः अथ स्त्रीकर्तृक श्राद्ध प्रयोगः
स्नाता शुक्लवस्त्रयुगधारिणी मध्यान्हे सुसमावर्तं पञ्चगव्योपलेपितज्वलदंगार शोधितं गोरमृतिकाच्छादितं यथा
प्रादेशास्मृदितश्राद्धीयद्रव्यं ज्वलितदीपं विकीर्णतिलगौरसर्षपं श्राद्धदेशमागत्या वम्यासने प्राङ्मुखी उपविशेत् पा
पिकांतरपक्षेस्मिन् मिति पाविकां एच्छेत् अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यं
तरः शुचिः पुंडरीकाक्षः पुनात्विति कुशत्रयजलेन श्राद्धीयद्रव्याणि सिंचेत् ततः कुशत्रय तिलजलान्यादाय अद्यामु
कगोत्रस्य पत्युरमुकशर्मणः सांवत्सरिकैकोद्दिष्ट श्राद्धमहं करिष्ये इति संकल्पये ततः देवताभ्यः दतिस्त्रिर्जपेत् ततो द
क्षिणामुखी पातितवामजानुर्मोटकतिलजलान्यादाय अद्यामुकगोत्रपते ऽमुकशर्मन् सांवत्सरिकैकोद्दिष्ट श्राद्ध इ

श्रा॰ ऽमासनेतेनमः इतिपितृतीर्थेनमोटकरूपमासनमुत्सृजेत् ततस्तूष्णींभोजनपात्रेतिलान्प्रक्षिप्य अर्घपात्रेपवित्र
७१ धारांजलप्रक्षेपस्तिलगंधपुष्पप्रक्षेपश्च ततोऽर्घपात्रंवामहस्तेकृत्वापवित्रमुत्तराग्रंभोजनपात्रेधृत्वा तदुपरि
उदकांतरंदत्वा मोटकादीन्यादाय अद्यामुकगोत्रपतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्ध एष तेहस्तार्घोनम
इत्यर्घंपवित्रोपरिदद्यादुत्सृजेत् ततोऽवशिष्टजलपवित्रसहितमर्घपात्रमासनवामभागेपत्न्येस्थानमसीति
न्युब्जीकुर्यात् ततोगंधादिदानम् मोटकतिलजलान्यादाय अद्यामुकगोत्रपतेऽमुकशर्मन्सांवत्सरिकैकोद्दि
ष्टश्राद्धेएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेनमः ततोजलेनासनसहितंभोजनपात्रंमंडलेन
वेष्टयेत् श्राद्धीयान्नाग्रभागंसव्यंजनंसतिलजलंपुटकादौकृत्वा मोटकादीन्यादायइदमन्नमेतद्भूस्वामिपितृभ्यो
नमइतिभूस्वामिनेऽन्नंदद्यात् ततोत्ताम्रपात्रस्थितमन्नंकराभ्यांमादायपतिंध्यायतीपरिवेषयेत् जलंघृतंव्यंज
नंपुटकांतरस्थातत्रोपनीय अन्नेमधुदत्वामधुमध्वितिचजपेत् ततउभाभ्यांव्यस्ताभ्यांभोजनपात्रमालभ्यान्नम
न्ततयाचिंतयेत् हव्यकव्यमिदंरक्षमदीयमितिपठित्वादक्षिणहस्तमुत्तोल्यतदंगुष्ठमिदमन्नं इमाआपः इदमा राम
ज्यमित्यन्नजलघृतेषुनिक्षिप्यइदंकविरितिपुनरन्नेऽगुष्ठंनिक्षिप्यअन्नोपरितिलान्विकीर्यमोटकादीन्यादाय अद्यामु ७२

कगोत्रपतेऽमुकशर्म्मन् सांवत्सरिकैकोद्दिष्टश्राद्धइदमन्नं सोपकरणं तेनमः इत्यन्नमुत्सृजेत् ततोवामहस्तमस्पृष्टो त्वा
न्नहीनमित्यादि पठित्वाततोभूमौतिलान्विकीर्य्यदर्भेषूपविश्यनीलकंठस्तुतिरुचिस्तवादीनि पठेत् अपाक्तोनमस्तु
भ्यंविरूपाक्षइति श्लोकमपिपठेत् ततउच्छिष्टसन्निधावास्तृतकुशत्रयांभूमिंप्रोक्ष्यसतिलजलप्रोक्षितंसर्वव्यंजन
घृतमन्नमादाय अनग्निदग्धाः पठित्वाकुशोपरिकुशादिनाविकिरेत् ततआचम्यहरिंस्मृत्वादक्षिणामुखोपिण्ड।
स्थानेप्रादेशमात्रंपरिमापकरद्वयतर्जन्यंगुष्ठतत्तन्मूलयादर्भपिंजुल्यातदुल्लिख्य दर्भपिंजलीमुत्तरतःक्षिपेत्।
ततस्तत्रज्वलदंगारंभ्रामयित्वादक्षिणस्यांदिशिक्षिपेत् ततस्तत्रछिन्नमूलकुशत्रयमास्तीर्यप्राङ्मुखोदेवताभ्यइ
त्यादिभिः पठेत् ततोदक्षिणामुखोपुटकेतिलजलगंधपुष्पाणिकृत्वापाणिनामोटकान्यादाय अद्यामुकगोत्रपतेऽमु
कशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धपिण्डस्थानेऽत्रावनेनिक्ष्वतेनमइतिकुशोपरि अवनेजनंदद्यात् ततस्तिलजल
व्यंजनमधुघृतयुतान्नेनपिंडंनिर्म्मायमधुघृताभ्याम्भिधार्य्यमोटकादीनिचादाय अद्यामुकगोत्रपतेऽमुकशर्मन्सां
वत्सरिकैकोद्दिष्टश्राद्धएषतेपिंडोनमइत्यवनेजनंकुशोपरिवामान्वारब्धदक्षिणपाणिनापिंडंदद्यात् ततोहरिंव
न्यहरिंस्मृत्वातनउत्तराभिमुखोभूत्वाश्वासंनियम्यपतिंध्यायतीदक्षिणामुखीभवेत् ततोदत्तावशिष्टजलयुतम

श्रा वनेजनपात्रंमोदकादीनिचादाय अद्यामुकगोत्रपतेऽमुकशर्मन् सांवत्सरिकैकोद्दिष्टश्राद्धे पिंडेऽत्रप्रत्यवनेनिक्ष्वमेन
७४ मइतिप्रत्यवनेजनंदद्यात्ततोनीवींविस्रंस्याचम्यदक्षिणामुखीवामेनपाणिनासूत्रमादायदक्षिणेनपिंडोपरिधृ
त्वा अद्यामुकगोत्रपतेऽमुकशर्मन्सांवत्सरिकैकोद्दिष्टश्राद्धपिंडेएतत्तेवासोनमइतिमोदकादिनासूत्रमुत्सृजे
त् ततःपिंडेगंधादिदानं ततः शिवाआपःसंत्वितिजलं सौमनस्यमस्त्वितिपुष्पम् अक्षतंचारिष्टमस्त्विति तंडुला
न्भोजनपात्रेप्रक्षिप्य मोदकादीन्यादाय अद्यामुकगोत्रस्यपत्युरमुकशर्मणः सांवत्सरिकैकोद्दिष्टश्राद्धेदत्तैतदन्न
पानादिकमक्षय्यमुपतिष्ठतामित्यक्षय्योदकंदद्यात् ततः पिंडोपरि आघोरःपतिरस्तु इति पूर्वाग्रांजलधारां दद्या
त् ततःप्राङ्मुखीकृतांजलिः गोत्रंनोवर्द्धतामित्यादिपठित्वा एताःसत्याःशिषःसंत्विति आशिषःप्रार्थयेत् ततः पिंडोप
रि दक्षिणामुखीसपवित्रकुशत्रयंदक्षिणाग्रमास्तीर्य तदुपरिदक्षिणाग्रांजलधारांदद्यात् ततोनम्रीभूयपिंडमा
घ्रायोत्थापयेत् पिंडाधारकुशानुल्मुकंचवन्हौनिक्षिपेत् ततोऽर्घपात्रमुत्तानीकृत्यदक्षिणादानं अद्यामुकगोत्र
स्यपत्युरमुकशर्मणः कृतैतत्सांवत्सरिकैकोद्दिष्टश्राद्धप्रतिष्ठार्थंरक्तिकापरिमितंरजतंचंद्रदैवतंयथानामगो राम
त्रायब्राह्मणायदक्षिणांदातुमहमुत्सृजेइतिदक्षिणांदद्यात् ततोऽभिरम्यतामितिविसर्जनम् ततःप्राङ्मुखीदेवता ७४

म्य इति त्रिः पठेत् ततो दक्षिणामुखो हस्ताभ्यां दीपं निर्वाप्य ततो हस्तौ पादौ प्रक्षाल्याचम्य प्रमादात्कुर्वतामित्यादि प
ठित्वा श्राद्धसंपूर्णकामतया विष्णुं स्मरेत् ततः श्राद्धीयवस्तु ब्राह्मणायार्पयेत् अंभसि वा क्षिपेत् ततइष्टैः सह
भोजनम् एवमेव शस्त्रहतादिनिमित्तकमाश्विनकृष्णचतुर्दश्यां तिथौ श्राद्धं कर्तव्यं सांवत्सरिकपदं तत्र न दातव्य
तद्यथा अद्य आश्विनकृष्णचतुर्दश्यां तिथौ अमुकगोत्रस्य पत्युरमुकशर्मण एकोद्दिष्टश्राद्धमहं करिष्ये इति संक
ल्पः अद्यामुकगोत्र पते ऽमुकशर्मन्नेकोद्दिष्टश्राद्धे इदमासनं ते नमः इत्येवमादिना ऽऽसनादिदानम् एवमेव भ्रूर
कर्तृकैकोद्दिष्टश्राद्धे प्रयोगः अथ पाक्षिकपार्वणश्राद्धप्रयोगः अपरान्हे स्नातः शुक्लाहिवासाः शुचिराचम्य वस्त्रा
दिनावेष्टितं श्राद्धदेशमागच्छेत् ततः प्राङ्मुख उपविश्य सिद्धान्नसंभवे सिद्धमिति पाक्षिकांश्च स्पृष्ट्वा ओं अपवित्रः
स्यादि पठित्वा ओं पुंडरीकाक्षः पुनात्विति कुशत्रयानीतजलैः श्राद्धवस्तूनि सिंचेत् रक्षार्थं दीपं निधाय गौरसर्ष
पैरवकीर्य ओं नमो नमस्ते गोविंद पुराणपुरुषोत्तम इदं श्राद्धं हृषीकेश रक्ष त्वं सर्वतो दिशः प्राच्यै नमः अवाच्यै न
मः प्रतीच्यै नमः उदीच्यै नमः यवपुष्पैः भूम्यै नमः इति भूमिं त्रिः संपूज्य पादयोरधः कुशत्रयं दत्वा ततः कुशत्रयतिल
जलैः संकल्पं कुर्यात् ओं अद्यामुकमासे ऽमुकपक्षे ऽमुकतिथौ अमुकगोत्राणां पितृपितामहप्रपितामहानाममुक

श्रा· मुकशर्म्मणां अमुकगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्म्मणामपात्रकपार्वणश्राद्धमहंकरि
२५ ष्ये ततोगायत्रींत्रिर्जपित्वा ओंदेवताभ्यइत्यादित्रिर्जपेत् ततउत्तराभिमुखोदक्षिणोत्तरक्रमादासादितकुशत्रयात्मका
सनद्वयंप्रथमंदक्षिणमासनंसयवमुत्सृजेत् ओंअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममुकामुकशर्म्मणांपा
र्वणश्राद्धसंबन्धिनोविश्वेदेवाइदमासनंवोनमः इतिकुशत्रययवजलैरुत्सृजेत् एवंओंअद्यामुकगोत्राणांमाता
महप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्म्मणांपार्वणश्राद्धसंबंधिनोविश्वेदेवाइदमासनंवोनमइत्यु
परमुत्सृजेत् ततोऽपसव्यंकृत्वा पातितवामजानुर्दक्षिणाभिमुखोद्विगुणभुग्नकुशत्रयतिलजलान्यादाय
पूर्वपश्चिमासादितमोटकरूपाणिषडासनानितिलजप्रोक्षितानिप्रत्येकंपित्रादिभ्यः पश्चिमतआरभ्यउत्सृजे
त् तत्क्रमः ओंअद्यामुकगोत्रस्यपितुरमुकशर्म्मणःपार्वणश्राद्धेइदमासनंतेस्वधा एवंपितामहप्रपितामहयोः
ओं अद्यामुकगोत्रमातामहामुकशर्म्मणःपार्वणश्राद्धइदमासनंतेस्वधा एवमेवप्रमातामहवृद्धप्रमातामहयोर्द
द्यात् ततःसव्यंकृत्वा ओंविश्वान्देवानहमावाहयिष्येइत्युक्त्वा ओंविश्वेदेवासऽआगतश्रृणुतामऽइमंहवम् इमंव राम·
र्हिर्न्निषीदतेत्यादिनादेवानावाह्य ओंयवोसियवयास्मद्द्वेषोयवयारातीरितियवान्विकीर्य्य ओंविश्वेदेवाः श्रृणुते ७५

त्यादिजपेत् ॐ आगच्छंतु महाभागा विश्वेदेवा महाबलाः ये यत्र योजिताः श्राद्धे सावधाना भवंतु ते इति श्लोकं च पठेत् त
तोऽपसव्यं कृत्वा दक्षिणाभिमुखः ॐ पितॄनहमावाहयिष्य इत्युक्त्वा ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि
उशन्नुशतऽ आवह पितॄन् हविषेऽ अत्तवे इत्यादिना पितॄनावाह्य ॐ अपहताऽ असुरारक्षांसि वेदिषदः
इत्यादिना पात्रेषु तिलान् विकीर्य ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञे
स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मानित्यादि पठेत् ततः सव्यं कृत्वा देवार्घपात्रद्वये पवित्रे धृत्वा अपसव्येन पि
त्र्यार्घपात्रेषु प्रत्येकं पवित्रं धृत्वा सव्येन देवार्घपात्रद्वये ॐ शन्नो देवीरभिष्टयऽ आपो भवन्तु पीतये शंय्यो
रभिस्रवन्तु नः इत्यादिना जलं प्रक्षिप्य अपसव्येन पित्र्यार्घपात्रषट्केऽनेनैव मन्त्रेण जलं पितृतीर्थेन क्षिपेत्
ततः सव्यं कृत्वा ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति देवार्घपात्रद्वये प्रत्येकं यवान् प्रक्षिप्य अपसव्येन पि
त्र्यार्घपात्रेषु प्रत्येकम् ॐ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः ॥ प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणा
हि नः स्वाहा इति तिलान्प्रक्षिपेत् ततः सव्येन देवार्घपात्रद्वये तूष्णीमेव गंधपुष्पे प्रक्षिप्य अपसव्येन पित्र्यार्घ
पात्रेषु प्रक्षिपेत् ततः सव्यं कृत्वा एकं देवार्घपात्रं वामहस्ते कृत्वा तत्रस्थिते पवित्रे देवभोजनपात्रे पूर्वाग्रं धृत्वा

श्रा तदुपरि किंचिदुदकांतरं दत्वा ॐ या दिव्या आपः पयसा संबभूवुर्या आन्तरिक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता
७६ नः आपः शिवाः सꣳ स्योना सुहवा भवंतु इति पठित्वा यवकुशजलान्यादाय ॐ अद्यामुकगोत्राणां पितृपिताम
हप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबंधिनो विश्वेदेवा एष ते हस्तार्घो नमः इत्यर्घं दद्युत्सृजे
त् एवमेव मातामहादिदेवेभ्योपि दद्यात् ततोऽपसव्यं कृत्वा पित्रर्घपात्रं वामहस्ते कृत्वा पितृभोजनपात्रे दक्षिणा
ग्रे पवित्रे धृत्वा तदुपरि किंचिदुदकांतरं दत्वा ॐ या दिव्या आपः पयसा संबभूवुर्या आंतरिक्षा उत पार्थिवीर्या हिर
ण्यवर्णा यज्ञियास्ता न आपः शिवाः सꣳ स्योना सुहवा भवंतु इति पठित्वा मोटकतिलजलान्यादाय ॐ अद्यामुक
गोत्र पितरमुकशर्मन् पार्वणश्राद्धे एष ते हस्तार्घः स्वधेति अर्घं दद्युत्सृजेत् एवमेव पितामहादिपंचभ्यो दद्या
त् ततः सव्यं कृत्वा पवित्रसहितमवशिष्टजलयुते देवार्घपात्रद्वयं यथाक्रमं प्रत्येकं देवासनदक्षिणपार्श्वे ॐ वि
श्वेभ्यो देवेभ्यः स्थानमसीत्युक्त्वा उत्तानमेव धारयेत् अपसव्यं कृत्वा किंचित् प्रपितामहार्घपात्रस्थितपवित्रादीनि
पितामहार्घपात्रे कृत्वा तानि सर्वाणि पित्रर्घपात्रे कृत्वा पित्रर्घपात्रं पितामहार्घपात्रोपरि तदुभयं प्रपितामहार्घपा रामः
त्रोपरि धृत्वा पितृवामपार्श्वे ॐ पितृभ्यः स्थानमसीति मिलितान्येव न्युब्जीकुर्यात् एवमेव मातामहार्घपात्राणि ७६

मेलयित्वा मातामहवामपार्श्वे ॐ मातामहप्रमातामहवृद्धप्रमातामहेभ्यः स्थानमसीत्यर्घपात्राण्युत्तानीकुर्यात् त
तः सव्यं कृत्वा गंधादिदत्वा यवकुशजलैः स
र्वास्थापितानि चतानि रक्षितानि दक्षिणा दानपर्यंतं नोद्धरेत् न चालयेत् ततः सव्यं कृत्वा गंधादि दत्वा यवकुशजलैः स
पाणि पितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबंधिनो विश्वे
देवाः एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि वो नम इति यथासंभवमुत्सृजेत् एवमेव मातामहा
दिदेवेभ्योऽपि दद्यात् ततोऽपसव्यं कृत्वा गंधादि दत्वा मोटक तिलजलान्यादाय ॐ अद्यामुकगोत्र पितरमुकश
र्मन् पार्वणश्राद्धे एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि ते स्वधेति पित्रे गंधादि दद्यात् एवमेव
पितामहादिभ्यश्चभ्योऽपि दद्यात् ततो जलेन भोजनपात्रसहितमासनं वेष्टयित्वा मंडलानि कुर्यात् ततः श्राद्धदेया
न्नाग्रभागमानीय सघृतं तत्सव्येनैव प्राङ्मुखः पुटकादिस्थितजले आहुतिद्वयं जुहुयात् ॐ अग्नये कव्यवाहना
यस्वाहा ॐ सोमाय पितृमते स्वाहा ततो जलघृतसहितं तिलव्यंजनयुतमन्नमपसव्येन ॐ इदमन्नमेतद्भूस्वा
मि पितृभ्यो नम इति दद्यात्ततो हुतशेषमन्नं किंचित्किंचित्सव्येन देवपात्रद्वये अपसव्येन पित्रादिपात्रेषु दत्वा
पिण्डार्थं किंचिदवशेषयेत् तत उत्कृष्टमन्नं सिद्धमामं वा पुरुषाहारसमं प्रत्येकं परिविष्य यथासंभवमुपकरण

श्रा· जलंघृतंचतत्रोपनीयसव्येनदेवे अपसव्येनपित्रादिपात्रेषुमधुन्नोपरिदत्वा प्रत्येकंॐमधुवाताऽऋतायतेमधुक्षरन्ति
१७ सिन्धवः माध्वीर्न्नः सन्त्वोषधीः ॐमधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनः पिताॐमधुमान्नोवनस्पति
र्म्मधुमा ३॥ अस्तुसूर्य्यः माध्वीर्गावोभवन्तुनः ॐमधुमधुमधुरितिचजपेत् ततःसव्येनउत्तानपाणिभ्यांदेवपात्रंस्पृष्ट्वा
ॐपृथिवीतेपात्रं द्यौरपिधानंब्राह्मणस्यमुखेऽ अमृतेऽअमृतंजुहोमिस्वाहा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेप
दम् समूढमस्यपाꣳसुरेइतिपठित्वा ॐकृष्णकव्यमिदंरक्ष मदीयमितिपठित्वा ॐइदमन्नमित्यन्ने ॐइ
मा आपइतिजले ॐइदमाज्यमितिघृते ॐइदंहविरितिपुनरन्नेदक्षिणाकरांगुष्ठमावेश्य ॐयवोसियवयास्मद्द्वेषो
यवयारातीरितियवानन्नेप्रक्षिप्य ॐअद्यामुकगोत्राणांपितृपितामहानाममुकामुकशर्मणांपार्वणश्राद्धसंबंधि
नोविश्वेदेवाएतद्वोन्नंसोपकरणंनमः इतिकुशत्रययवजलैरुत्सृजेत् एवमेवमातामहादिदेवेभ्योपिदद्यात् त
तोऽपसव्यंकृत्वादक्षिणामुखःपातितवामजानुःपितृपात्रंन्युब्जाभ्यांव्यस्ताभ्यांपाणिभ्यांस्पृष्ट्वा ॐपृथिवीतेपात्रं
द्यौरपिधानंब्राह्मणस्यमुखेऽ अमृतेऽअमृतंजुहोमिस्वाहा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्य राम·
पाꣳसुरेइतिपठित्वा ॐकृष्णकव्यमिदंरक्षमदीयमितिपठित्वा ॐइदमन्नमित्यन्ने ॐइमाआपइतिजले ॐइ १७

दमाज्यमितिघृते ॐइदंकविरितिपुनरन्नेदक्षिणाकरांगुष्ठमावेश्य ॐअपहताऽअसुरारक्षा७ंसिवेदिषदइत्य
न्नोपरितिलान्विकीर्य्यमोदकतिलजलान्यादाय ॐअद्यामुकगोत्रायपित्रेऽमुकशर्मणेपार्वणश्राद्धएतत्तेन्नंसो
पकरणंस्वधेतिपित्रेन्नमुत्सृजेत् एवमेवपितामहादिभ्योपिदद्यात् यद्येकंपात्रंभवतितदापृथिवीपात्रमितिम
न्त्रःपुनर्नपठनीयः ततः अन्नहीनंक्रियाहीनंविधिहीनंचयद्भवेत् तत्सर्वमच्छिद्रमस्तुइतिजपेत् ततोगायत्री
त्रिर्जपेत् ततः कुशेषूपविश्य ॐमधुवाताइतितृचंजप्त्वारक्षोघ्नीः ॐकृणुष्वपाजइत्याद्याऋचःपठित्वाभूमिं
तिलैरवकिरेत् ॐउदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः असुंयईयुरवृकाऽऋतज्ञास्तेनो
वन्तुपितरोहवेषुइत्यादिपितृमंत्रान् ॐसहस्रशीर्षेत्यादिपुरुषसूक्तंजपे ॐआशुःशिशानइत्यादिकमप्रतिर
थं अन्यानिचपवित्राणिजपेत् पुराणेतिहासस्तोत्रादीनिचजपेत् ततउच्छिष्टसन्निधानावास्तृतकुशांश्चप्रा
ग्रंप्रोक्ष्यसर्वप्रकारमन्नमुद्धृत्यसतिलमेकीकृत्य ॐअग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेममभूमौदत्तेनतृप्य
न्तुतृप्तायांतुपरांगतिमितिकुशोपर्यन्नमुत्सृजेत् ततः सव्यंकृत्वाचम्यहरिंस्मृत्वागायत्रींमधुवाताइतितृचंम
धुमधुमध्वितिचजपेत् ततोऽपसव्यंकृत्वापिण्डपातनार्थंनिर्मितहस्तमात्रंचतुरंगुलोच्छ्रितंदक्षिणाप्लवंपरिर

श्रा· काद्वयमध्यस्थाने सव्यहस्तधृतोपरिभागेन दक्षिणहस्तधृतमूलेन पवित्रेण ओं अपहता ऽ असुरा रक्षांसि वेदि
७८ षद इति मंत्रेण प्रादेशमात्रमुल्लिखेत् पवित्रमैशान्यां दिशि क्षिपेत् ततः उभयत्र ओं ये रूपाणि प्रतिमुंचमाना ऽ
असुराः सन्तः स्वधया चरन्ति परापुरो निपुरो ये भरंत्यग्निष्टांल्लोकात्प्रणुदात्वस्मादिति मंत्रेण ज्वलदंगारं प्रत्ये
कं भ्रामयेत् अंगारं दक्षिणतो निदध्यात् ततः उपमूलसकृदाच्छिन्नदक्षिणाग्रकुशत्रयं रेखायामास्तृणुया
त् ततः सव्यं कृत्वा ओं देवताभ्य इति त्रिर्जपेत् ततोऽपसव्यं कृत्वा पुटकषट्के जलतिलगंधपुष्पाणि कृत्वा एकं
पात्रं वामहस्ते कृत्वा मोटकतिलजलान्यादाय ओं अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्ध पिण्डस्थाने ऽ
त्रावनेनिक्ष्व ते स्वधा इत्यास्ततदर्भमूले ऽवनेजनं दद्यात् एवं पितामहाय परपात्रमादाय कुशमध्ये तृतीयं पा
त्रमादाय प्रपितामहाय कुशाग्रे दद्यात् एवमपरपिंडिकायामपि यथाक्रमं कुशेष्ववनेजनादि दद्यात् ततः सव्यं ज
न तिलजलमध्वाज्यहुतशेषान्नेन षट् पिण्डान्निर्माय मधुघृताभ्यामभिघार्य दद्यात् प्रथमं मोटकतिलजलपिण्ड
मादाय ओं अद्यामुकगोत्र पितरमुकशर्मन् पार्वणश्राद्ध एष ते पिण्डः स्वधा इति प्रथमावनेजनस्थाने पिण्डं दद्यात् एम·
एवं पितामहप्रपितामहयोः प्रत्येकं तत्तदवनेजनस्थाने पिण्डं दद्यात् एवमपरपिण्डानपि द्वितीयपिण्डिकायां तत्र ७८

त्तदवनेजनस्थानेमातामहादिभ्योदद्यात् पिण्डदानंच सव्योपगृहीतदक्षिणहस्तेनकार्यम् ततः प्रपितामहादूर्द्ध्वत्रया णांलेपभागभुजांतृप्तिमुद्दिश्य ॐ लेपभागभुजस्तृप्यंतुइतिपठित्वा पित्रादिकपिण्डाधारकुशमूलेकरंप्रोञ्छ्य सव्यं कृत्वा त्रिराचमेत् ततोहरिंस्मृत्वा अपसव्यंकृत्वा दक्षिणाभिमुखः ॐ अत्रपितरोमादयध्वंयथाभागमावृषायध्व मितिपठित्वा वामावर्त्तेनोदङ्मुखीभूयप्रीतमनाः श्वासंनियम्यतेनैवयथापरावर्त्तमानः पितृन्भास्वरमूर्त्तीन्ध्या यन् अमीमदंतपितरोयथाभागमावृषायिषतइतिजपेत्॥ ततःपूर्ववदन्नावशिष्टजलयुतमवनेजनपात्रमादा य ॐ अद्यामुकगोत्रपितरमुकशर्मन् पार्वणश्राद्धेपिण्डे अत्रप्रत्यवनेनिक्ष्वतेस्वधेति प्रथमपिण्डोपरिप्रत्यव नेजनंदद्यात् एवमेवतत्तदवनेजनपात्रैः पितामहादिभ्यस्तत्पिण्डोपरिप्रत्यवनेजनंदद्यात् ततोनीवीवि स्रस्य॥ सव्येनाचम्य अपसव्यंकृत्वा वामेनपाणिनानीयदक्षिणकरेसूत्रंकृत्वा ॐ नमोवःपितरोरसायनमो वःपितरःशोषायनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोघोरायनमोवः पितरोमन्यवेनमो वःपितरःपितरोमन्यवेनमोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तसतोवःपितरोदेष्मइतिपठित्वा एतद्वः पितरोवासइत्युक्त्वाषट्सुपिण्डेषुसूत्राणिधृत्वा मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्रपितरमुकशर्मन्

पार्वणश्राद्धे पिण्डे एतत्ते वासः स्वधेति मन्त्रमुत्सृजेत् एवमपरपिण्ड पंचकेषु तत्तन्नाम्नोत्सृजेत् ततो गंधपुष्पधूपदीप
तांबूलानि प्रत्येकं पिण्डेषु दद्यात् ततः ॐ शिवा आपः सन्त्विति जलं सौमनस्यमस्त्विति पुष्पं ॐ अक्षतंचारिष्टम
स्त्विति तंडुलानन्नपात्रेषु क्षिपेत् ततो मोरकतिलजलान्यादाय ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः पार्वणा
श्राद्धे दत्तैतदन्नपानादिकमक्षय्यमस्त्वित्युत्सृजेत् एवमेव पितामहादीनामपि तत्तन्नाम्ना प्रत्येकमुत्सृजेत् ततः स
व्यं कृत्वा दक्षिणां दिशं पश्यन् सुमनाः पिण्डोपरि ॐ अघोराः पितरः संत्विति पठन् पूर्वाग्राजलधारां दद्यात् त
तः कृतांजलिः प्राङ्मुख आशिषः प्रार्थयेत् ॐ गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धन्तां वेदाः संततिरेव च श्रद्धा च
नोमाव्यगमद्बहुदेयं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंच
न एताः स त्या आशिषः संतु ततोऽपसव्यं कृत्वा पिंडोपरि सपवित्रकुशानास्तीर्य ॐ ऊर्ज्जं वहन्तीरमृतं घृ
तम्पयः कीलालम्परिस्रुतम् स्वधास्थ तर्प्पयत मे पितृनिति मंत्रेण सपवित्रकुशोपरि दक्षिणाग्राजलधारां द
द्यात् ततः स्वस्थानस्थितानेव पिण्डान्नत्रीभूयाघ्रायोत्थापयेत् ततः पिण्डाधारकुशानुल्मुकद्वयं च वन्हौ क्षिपे
त् ततः सव्येन देवार्घपात्रद्वयं संचाल्याऽपसव्येन पित्राद्यर्घपात्राण्युत्तानीकृत्य सव्येन कुशत्रयपवजलैर्देवदा

क्षिणां दद्यात् ॐ अद्यामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां पार्वणश्राद्धसंबंधिनां विश्वेषां
देवानां कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थं हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ए
वं मातामहादिश्राद्धसंबंधिविश्वेदेवब्राह्मणाय दक्षिणां दद्यात् ततोऽपसव्येन मोटकतिलजलान्यादाय पित्रादि
श्राद्धदक्षिणां दद्यात् ॐ अद्यामुकगोत्रस्य पितुरमुकशर्मणः कृतैतत्पार्वणश्राद्धप्रतिष्ठार्थमिदं रजतं चंद्रदैवतं
यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे एवं पितामहादिश्राद्धान्तमपि दक्षिणां दद्यात् हिरण्यर
जतासंपत्तौ यथासंभवमन्यदपि फलमूलादिकं दक्षिणां दद्यात् ॐ वाजेवाजेवत वाजिनो नो धनेषु विप्राऽअमृ
ताऽऋतज्ञाः अस्य मध्वः पिबत मादयध्वं तृप्तायात पथिभिर्देवयानैरिति पित्रादीन् विसर्जयेत् ॐ विश्वेदेवा
प्रीयंतामिति देवविसर्जनम् ततः सव्येन देवताभ्यः पितृभ्यश्चेति त्रिर्जपेत् ततोऽपसव्येन रक्षादीपं निर्वाप्य
सव्यं कृत्वा हस्तौ पादौ प्रक्षाल्याचम्य ॐ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं
स्यादिति श्रुतिरिति पठित्वा कर्मपूर्णतार्थं विष्णुं स्मरेत् श्राद्धीयद्रव्याणि ब्राह्मणाय प्रतिपादयेत् तदभावे ज
लेवा क्षिपेत् ततो वैश्वदेवबलिकर्मणी कुर्यात् तदुक्तं स्वाहान्तास्ता जलेवाग्नौ कुर्यात्पंचाहुतीः क्रमात् ब्रह्माप्र

श्रा० जापतिर्गृह्याः कश्यपोनुमतिस्तथा १॥ चतुर्थ्यंतैर्जलं क्षिप्त्वा वैश्वदेववलिं चरेत् पर्जन्य आपः पृथिवी धातापि च विपूर्व
८० गः २ चतुर्थ्यां पुः प्राच्यवाचीप्रतीचीचाप्युदीच्यब्रह्मान्तरिक्षसूर्याश्च विश्वेदेवास्ततः परं ३ विश्वेभूता उषाश्चापि भूता
नांच पतिस्तथा अपसव्येन सतिलं पितृभ्यश्च स्वधानमः ४ सनकादि सप्तमर्त्येभ्योहं तकंठोपवीतवान् यक्ष्मैतत्ते
वसव्येन जलं निर्णेजनं नमः ५ दद्यात्काकाश्च चांडालाः पतिताः पापसंगिनः ततः कीटपतंगाश्च गावः श्वानोत्त
तः परं ६ चतुर्थ्यंतानुपादाय नमोन्तान्क्रमतः पठेत् देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः
प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छंति मया प्रदत्तं १ कीटाः पतंगास्तरवश्च वृक्षा जले स्थले ये विचरंति
जीवाः ते तृप्तिमायांतु मया प्रदत्तं तेभ्यो विसृष्टं भुवि चान्नमेतत् २ पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः क
र्मनिबंधबद्धाः प्रयांतु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवंतु ३ येषां न माता न पिता न बंधुर्न चान्नसिद्धि
र्न तथान्नमस्ति तत्तृप्तयेन्नं भुवि दत्तमेतत्ते यान्ति तृप्ता मुदिता भवंतु ४ घां खः सौरभेय्य इति गोभ्यस्ततः श्वानावि
तिश्वभाः इंद्रेति वायसानां च श्वानके निक्षिपेद्भुवि ततः ब्राह्मणान्भोजयेत् इति नैमित्तिकश्राद्धवलिदानमि राम
ति यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥ इति पार्वणश्राद्धविधिः ८०

एष विधिरुपरागनवान्नभक्षणतीर्थप्राप्तिनिमित्तकादिश्राद्धेषु बोद्धव्यः तीर्थप्राप्तिनिमित्तकादिश्राद्धेष्वावाहनार्घा
भाव इति विशेषः ॥ अथाभ्युदयिकश्राद्धम् तत्र प्रथमं तन्नियत पूर्वाङ्गस्य मातृपूजा विधिः प्रातःकाले स्नातः कृता
नित्यक्रियः कुड्ये फलके वा स्थापितरक्षिकासु प्रदक्षिणतये गणपतिसहित षोडशमातृः मृत्तिकामय्यो ऽग्नियतद्भा
वे तामयिरक्षिकायां पूजयेत् तत्र मातरश्च गौरी पद्मा शची मेधा सावित्री विजया जया देवसेना स्वधा स्वाहा मातरो लो
कमातरः तुष्टिः पुष्टिस्तथा तुष्टिरथात्मकुलदेवतेति तत्क्रमः आचम्य प्राङ्मुख उपविश्य प्रथमरक्षिकामारभ्य
क्रमेण गणपतिरसि गौर्य्यसि पद्मासि शच्यसि मेधासि सावित्र्यसि विजयासि जयासि देवसेनासि स्वधासि स्वा
हासि मातरः स्थः लोकमातरः स्थ तुष्टिरसि पुष्टिरसि तुष्टिरसि आत्मकुलदेवतासि श्रीरसीत्युल्कातनो ऽक्षता
न्दद्यात् पुनः प्रथमरक्षिकामारभ्य ॐ भूर्भुवः स्वर्गणपते इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वर्गौरि इहागच्छ इह
तिष्ठ ॐ भूर्भुवः स्वः पद्मे इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वः शचि इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वर्मेधे इहागच्छ
इह तिष्ठ ॐ भूर्भुवः स्वः सावित्रि इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वर्विजये इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वर्देवसेने
इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वः स्वधे इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वः स्वाहे इहागच्छ इह तिष्ठ ॐ भूर्भुवः स्वर्मा

भा· तरइहागच्छतइहतिष्ठत ॐभूर्भुवःस्वर्लोकमातरइहागच्छतइहतिष्ठत ॐभूर्भुवःस्वःत्वष्टेइहागच्छइहतिष्ठ ॐभू
८१ र्भुवःस्वःपुष्टेइहागच्छइहतिष्ठ ॐभूर्भुवःस्वस्तुष्टेइहागच्छइहतिष्ठ ॐभूर्भुवःस्वआत्मकुलदेवतेइहागच्छइ
हतिष्ठ ॐभूर्भुवःश्रीःइहागच्छइहतिष्ठ गणपतिसहिताएतामातृःश्रियंचप्रत्येकमोंकारव्याहृतिपूर्वकमावा
ह्यस्थापयित्वा ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञंसमिमंदधातुविश्वेदेवास
इहमादयंतामोंप्रतिष्ठइत्यक्षतान्विकीर्य्यएकदैवप्रतिष्ठांकुर्यात् ततःपाद्यादिगृहीत्वाप्रथमततआरभ्यएतानि
पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि ॐगणपतयेनमइदमनुलेपनं ॐगणाः इमानिपुष्पाणि ॐगण
पतयेनमः इतित्रिःपूजयेत् एतानिगंधपुष्पधूपदीपतांबूलनैवेद्यानि ॐगणपतयेनमः एवमेवॐगौर्यै
नमः ॐपद्मायैनमः ॐशच्यैनमः ॐमेधायैनमः ॐसावित्र्यैनमः ॐविजयायैनमः ॐजयायैनमः ॐदेव
सेनायैनमः ॐस्वधायैनमः ॐस्वाहायैनमः ॐमातृभ्योनमः ॐलोकमातृभ्योनमः ॐत्वष्ट्यैनमः ॐपुष्ट्यैनमः
ॐतुष्ट्यैनमः ॐआत्मकुलदेवतायैनमः ॐश्रियैनमः इतिपाद्यादिभिःप्रत्येकमर्चयेत् ततोगणपतिश्रीसहिताः स्म
षोडशमातरःक्षमध्वमितिविसर्जनम् ॐश्रीर्मपिरमस्वेति ततोघृतेनभित्तौपंचसप्तवारेस्वांउत्तरोत्तरक्रमेणाकुर्य ८१

त् ताश्च फलेन प्रतिच्छेदनेन मंत्रेण ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् देवस्त्वा सविता पुना
तु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः इत्यनेन भिन्नैस्त्रिः पंच सप्त वा घृतधारां दद्यात् अथाभ्युदयिकश्रा
द्धप्रयोगः तत्र दक्षिणोत्तरक्रमेण द्वादशस्थानेषु प्रत्येकमासादितद्रव्यं ज्वलितप्रदीपदेशमागत्याचम्य प्राङ्मुख उ
दङ्मुखो वोपविशेत् सव्येन सर्वं कर्म कर्त्तव्यं ऋजव एव कुशाः तिलकार्ये यवाः कर्त्तव्याः ततः ॐ अपवित्रः पवित्रो
वा सर्वावस्थां गतोपि वा यः स्मरेत्पुंडरीकाक्षं स बाह्याभ्यंतरः शुचिः ॐ पुंडरीकाक्षः पुनातु इति श्राद्धीयद्रव्या
णि सिंचेत् कुशोदकेन ततः कुशयवजलान्यादाय ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुका
मुकदेवीनां नांदीमुखीनां तथामुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां नांदीमुखानां
तथामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहाना ममुकामुकशर्मणां नांदीमुखानां अमुकगो
त्रस्यामुकस्य कर्तव्यामुककर्मनिमित्तकमाभ्युदयिकश्राद्धमहं करिष्ये इति संकल्पयेत् ततो गायत्रीं त्रिर्जपित्वा
ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिर्जपेत् ततः ॐ अद्या
मुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा

श्रा: इदमासनं वो नमः इति कुशत्रयरूपं सपवित्रसयवमासनं दक्षिणात आरभ्योत्सृजेत् एवं यथोत्तरं ॐ अद्यामुकगो
८२ त्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां नांदीमुखानां आभ्युदयिक श्राद्धसंबंधिनो विश्वेदेवा इद
मासनं वो नमः ॐ अद्यामुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां नांदीमुखाना
माभ्युदयिक श्राद्धसंबंधिनो विश्वेदेवा इदमासनं वो नमः ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युद
यिक श्राद्ध इदमासनं ते नमः एवं पितामहीप्रपितामहीभ्यामासनं दद्यात् ॐ अद्यामुकगोत्र पितरमुकशर्मन्
नांदीमुखाभ्युदयिक श्राद्ध इदमासनं ते नमः एवं पितामहप्रपितामहयोरपि ॐ अद्यामुकगोत्र मातामहाऽमु
कशर्मन् नांदीमुखाऽभ्युदयिक श्राद्ध इदमासनं ते नमः एवं प्रमातामहवृद्धप्रमातामहयोरपि ततआवाहनम् ॐ
विश्वान्देवानहमावाहयिष्ये इत्युक्त्वा ॐ विश्वेदेवासऽआगतशृणुतामऽइमꣳ हवम् एदं बर्हिर्निषीदत इ
त्यावाह्य ॐ यवोसि यवयास्मद्द्वेषो यवयारातीरिति देवपात्रे यवान् विकीर्य ॐ विश्वेदेवासऽ आगताशृणुताम
ऽइमꣳ हवम् मे ये ऽअन्तरिक्षेयऽ उपद्यविष्ठ ये अग्निजिह्वा उत वा यजत्राऽ आसद्यास्मिन् बर्हिषिमादयध्वम् राम·
ॐ आगच्छंतु महाभागा विश्वेदेवा महाबलाः ये यत्र योजिताः श्राद्धे सावधाना भवंतु ते इति पठेत् ॐ नांदीमुखान् ८२

पितॄनहमावाहयिष्येइत्युक्त्वा ॐउशन्तस्त्वानिधीमह्युशंतः समधीमहि उशन्नुशतः आवहपितॄनहविषेऽअत्तवेइति पितॄनावाह्य ॐअपहताऽअसुरारक्षाꣳसिवेदिषदइति मात्रादिपात्रेयवान्विकीर्य्य ॐआयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मानितिपठित्वा ततोऽर्घकरणम् तत्रदेवपूर्वकं सर्वेष्वर्घपात्रेषुपवित्राणिकृत्वा ॐशन्नोदेवीरभिष्टयआपोभवन्तुपीतये शंय्योरभिस्रवन्तुनइतिजलंक्षिपेत् ततोदेवार्घपात्रेषु ॐयवोसियवयास्मद्द्वेषोयवयारातीरितियवान्क्षिपेत् मात्रादिपात्रेषु ॐयवोसिसोमदेवत्योगोसवोदेवनिर्म्मितः प्रत्नमद्भिः एक्तः पुष्ट्यान्नान्दीमुखाल्लोकान्प्रीणाहिनः स्वाहेति मंत्रेणयवान्क्षिपेत् ततः प्रत्येकंगंधपुष्पेतूष्णींक्षिपेत् ततः प्रथमंदेवपात्रंवामहस्तेकृत्वा तत्रस्थपवित्रंभोजनपात्रेनिधायतदुपरिकिञ्चिदुदकांतरंदत्वा ॐयादिव्याआपःपयसासंबभुवुर्याअंतरिक्षाऽउतपार्थिवीर्याहिरण्यवर्णायज्ञियास्तानऽआपः शिवाः सꣳस्योनाः सुहवाभवन्त्वितिपठित्वाकुशत्रययवजलान्यादाय ॐअद्यामुकगोत्राणांमातृपितामहीप्रपितामहीनाममुकामुकदेवीनांनांदीमुखीनांआभ्युदयिकश्राद्धसंबंधिनोविश्वेदेवाएषवोहस्तार्घोनमः एवमेवपित्रादिश्राद्धदेवोभ्योमातामहादिदेवोयश्चहस्तार्घंदद्यात् ततोमातुरर्घप

श्रा· मादाय पूर्ववत्कृत्वा ॐयादिव्याइत्यादि पठित्वाकुशादीन्यादाय ॐअद्यामुकगोत्रे मातरमुकदेवि नांदीमुखि आभ्युदयिक
८३ श्राद्ध एष तेहस्तार्घोनमः एवं पितामहीप्रपितामह्योरपि दद्यात् ततः पित्राद्यर्घपात्रमादाय सर्वं पूर्ववत्कृत्वा कुशादीन्याद
य ॐअद्यामुकगोत्रपितरमुकशर्मन्नांदीमुखाभ्युदयिक श्राद्ध एषतेहस्तार्घोनमः एवमेव पितामहादिपंचभ्योहस्तार्घं द
द्यात् ततोऽवशिष्टजलपवित्रयुतं प्रथमं देवार्घपात्रमादाय ॐविश्वेभ्योदेवेभ्यः स्थानमसीति देवासनदक्षिणभागे उत्ता
नंस्थापयेत् एवमपरदेवार्घपात्रद्वयं तत्तदासनदक्षिणभागे उत्तानं स्थापयेत् ततः पितामहीप्रपितामहीपात्रद्वय
स्थितं पवित्रादि मात्रर्घपात्रे निधाय मात्रर्घपात्रं पितामह्यर्घपात्रोपरि तत्पात्रं प्रपितामह्यर्घपात्रोपरि धृत्वा दक्षिण
करेणादाय ॐमातृभ्यः स्थानमसि मात्रासनवामभागेन्युब्जं कुर्यात् एवमेव पित्राद्यर्घपात्राणांमेलनं कृत्वा पित्रासनवा
मभागे ॐपितृभ्यः स्थानमसीति अर्घपात्राणि न्युब्जीकुर्यात् एवमेव मातामहाद्यर्घपात्राणांमेलनं कृत्वा मातामहास
नवामभागे ॐमातामहप्रमातामहवृद्धप्रमातामहेभ्यः स्थानमसीति न्युब्जीकुर्यात् ततो गंधादिदानं तत्रक्रमः ॐ
अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिक श्राद्ध संबंधिनो विश्वे राम·
देवा एतानि गंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसि वोनमः एवं पित्रादिदेवेभ्यो मातामहादिदेवेभ्य श्चदद्यात् ८३

ततः ॐअद्यामुकगोत्रेमातरमुकदेविनांदीमुखिआभ्युदयिकश्राद्धएतानिगंधपुष्पधूपदीपतांबूलसिंदूरवासांसितेनमः एवंपितामहीप्रपितामहीभ्या मपिगंधादिदानम् ततःॐअद्यामुकगोत्रपितरमुकेशर्मन्नांदीमुखा भ्युदयिकश्राद्धेएतानिगंधपुष्पधूपदीपतांबूलयज्ञोपवीतवासांसितेनमः एवंपितामहादिपंचभ्योपिगंधादि दानम् ततोजलेनसर्वासनानिभोजनपात्रसहितानिचतुष्कोणमंडलेनवेष्टयेत् ततःसजलेपुटकादौहस्तेनैव सघृतमन्नंॐअग्नयेकव्यवाहनायस्वाहा ॐसोमायपितृमतेस्वाहा इत्याहुतिद्वयंजुहुयात् ततोऽपसव्यं कृत्वादक्षिणामुखःपातितवामजानुर्मोटकतिलजलान्यादाय ॐइदमन्नमेतद्भूस्वामिपितृभ्योनमः इतिभूस्वामि नेकिंचिदन्नंदद्यात् ततःसव्यंकृत्वाप्राङ्मुखउदङ्मुखोवाहुतशेषमन्नंदेवपूर्वकेपात्रेषुकिंचिद्दत्वा पिंडार्थंच किंचिदवशेषयेत् ततोन्यदन्नंयथासंभवंसर्वत्रपरिविष्यघृतंजलंचतत्रोपनीयपात्रमालभेत् तत्रक्रमः उत्तान पाणिभ्यांप्रथमंदेवपात्रंस्पृष्ट्वा ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा इति पठित्वा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपांसुरे ॐकृष्णहव्यमिदंरक्षमदीयमिति पठित्वा ॐइदमन्नमित्यन्ने ॐइमाआपइतिजले ॐइदमाज्यमितिघृते ॐइदंहविरितिपुनरन्नेइतिदक्षिणांगुष्ठमारोप्य॥

श्रा॰ ओं यवोसि यवयास्मद्द्वेषो यवयारातीरिति यवान् विकीर्य्य कुशादीन्यादाय ओं अद्यामुकगोत्राणां मातृपितामहीप्रपितामा-
८४ हीनाममुकामुकदेवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनो विश्वेदेवा इदमन्नं सोपकरणं वो नमः यद्वैकमेव
न पाणिना पात्रमस्पृशन्नेव ओं इदं विष्णुरित्यादि पठित्वा यवप्रक्षेपं कृत्वा कुशादीन्यादाय पित्राद्युल्लेखेन पित्रादि-
देवेभ्योप्यन्नमुत्सृजेत् एवमेव मातामहादिदेवेभ्यः भिन्नभिन्नपात्रपक्षे ओं पृथिवी ते पात्रमित्यादीनां सर्वेषामावृत्तिः त-
तो मातृपात्रमुत्तानाभ्यामेव कराभ्यां स्पृष्ट्वा ओं पृथिवी ते पा॰मित्यादि इदं विष्णुरिति पठित्वा ओं कृष्णकव्यमिदं रक्षस्व म-
दीयं ओं इदमन्नमित्यन्ने ओं इमा आप इति जले ओं इदमाज्यमिति घृते ओं इदं हविरिति पुनरन्ने दक्षिणाकराङ्गु-
ष्ठमारोप्य ओं अपहता असुरा रक्षांसि वेदिषद इत्यन्नोपरि यवान् विकीर्य्य ओं अद्यामुकगोत्रे मातरमु-
कदेवि नांदीमुख्याभ्युदयिकश्राद्ध इदमन्नं सोपकरणं तेनमः एवं पात्रालंभनादिकं कृत्वा प्रत्येकं पितामही-
प्रपितामहीभ्यामपि दद्यात् एवं तत्पात्रमालभ्य ओं पृथिवी ते पात्रमित्यादि पठित्वा पूर्ववत्सर्वं कृत्वा ओं अद्यामुकगो-
त्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्राद्ध इदमन्नं सोपकरणं तेनमः इति पित्रेन्नमुत्सृजेत् एवं पितामहादिभ्यः राम
पंचभ्योपि प्रत्येकमन्नमुत्सृजेत् ततः प्रांजलिः ओं अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् तत्सर्वमच्छिद्रमस्त्वि ८४

तिजपेत् दर्भेषूपविश्य गायत्रींत्रिर्जपित्वाओंमधुमधुमध्वितिजपेत् मधुव्वाताऋतायत्यादिऋचंजपेत् पितृमन्त्रान् ओंउ
दीरतामवरउत्सादीन् जपेत् अन्यानितुपुरुषसूक्तादीनिपवित्राणिजपेत् ततःप्रागग्रकुशत्रयंभूमावास्तीर्यजलेन
प्रोक्ष्यजलप्रोक्षितंमधुयवघृतमन्नंकुशादिना ओं अनग्निदग्धायेजीवायेप्रदग्धाःकुलेममभूमौदत्तेनतृप्यन्तुतृप्ता
यान्तुपरांगतिमितिमन्त्रेणकुशोपरिअन्नंविकिरेत् ततआचम्यहरिंस्मृत्वागायत्रींत्रिर्जपेत् चतुरस्रांपिण्डयो
ग्यांभूमिंपरिष्कृत्य उत्तरोत्तरक्रमेणस्थानत्रयेप्रादेशमात्रंपरिमाय ततःप्रागग्रांरेखांदर्भपिंजलीमूलेन ओंअप
हताः असुरारक्षांसिवेदिषद इतिरेखात्रयंकुर्यात् ततः प्रत्येकंरेखात्रयोपरि ओंयेरूपाणिप्रतिमुंचमानाअसु
राःसन्तःस्वधयाचरन्तिपरापुरोनिपुरोयेभरन्त्यग्निष्टांल्लोकात् प्रणुदात्वस्मादितिमन्त्रेणांगारान् भ्रामयेत्तदुपरिप्रत्ये
कंकुशत्रयमास्तीर्य ओंदेवताभ्यः पितृभ्यश्चमहायोगिभ्यएवचनमःस्वाहायैस्वधायैनित्यमेवनमोनमइतित्रिर्जपित्वा
प्रत्येकमवनेजनंदद्यात् तत्रक्रमः पवजलगधपुष्पैर्नवपात्राणिपूरयित्वा पात्रमेकंवामकरेकृत्वा कुशादीन्यादाय
ओं अद्यामुकगोत्रेमातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धपिण्डस्थानेऽत्राऽवनेनिक्ष्वतेनमः इतिसर्वदक्षिणकु
शत्रयमूलेमात्रेऽवनेजनंदद्यात् किंचिज्जलमवशेषयेत् एवमेवपात्रान्तरमादाय तत्कुशमध्येपितामह्यै अवनेजन

श्रा० दद्यात् तत्कुशत्रयाग्रे प्रपितामह्यै अवनेजनं दद्यात् ततश्चापरपात्रमादाय कुशादींश्चादाय ॐ अद्यामुकगोत्र पितर
८५ मुकशर्मन् नांदीमुखाभ्युदयिकश्राद्धपिण्डस्थाने ऽत्रावनेनिक्ष्व ते नमः इति मध्यस्थितकुशत्रयमूले पित्रे ऽवनेज
नं दद्यात् किंचिज्जलमवशेषयेत् एवं तत्तत्कुशत्रयमध्याग्रयोः पितामहप्रपितामहयोरवनेजनं दद्यात् ततः
सप्तपात्रमादाय कुशादींश्चादाय ॐ अद्यामुकगोत्र मातामहामुकशर्मन्नांदीमुखाभ्युदयिकश्राद्धपिण्डस्थाने ऽ
त्रावनेनिक्ष्व ते नम इत्यपरकुशत्रयमूले मातामह्या अवनेजनं दद्यात् एवं प्रमातामहवृद्धप्रमातामहयोरपि ततो य
वदधिबदरघृतमिश्रान्नेन पिण्डान् निर्माय एकं पिण्डं कुशादींश्चादाय ॐ अद्यामुकगोत्रे मातरमुकदेवि नांदीमु
खि आभ्युदयिकश्राद्धे एष पिण्डस्ते नम इति तदवनेजनस्थाने पिण्डं दद्यात् एवमेव पितामहीप्रपितामहीभ्यां स्वीयस्वी
यावनेजनस्थाने पिण्डं दद्यात् ततश्चतुर्थपिण्डमादाय ॐ अद्यामुकगोत्र पितरमुकशर्मन् नांदीमुखाभ्युदयिकश्रा
द्धे एष ते पिण्डो नमः एवं पितामहप्रपितामहयोः ततः सप्तमपिण्डमादाय ॐ अद्यामुकगोत्र मातामहामुकशर्म
न्नांदीमुखाभ्युदयिकश्राद्धे एष ते पिंडो नमः इत्यवनेजनस्थाने पित्रे पिण्डं दद्यात् एवमेव पितामहादिपंचभ्यस्त श्राम·
त्तदवनेजनस्थानेषु प्रत्येकं पंच पिण्डान् दद्यात् ततो दर्भमूले करं प्रोक्ष्याचम्य हरिं स्मृत्वा ॐ अत्र मातरो मादयध्वं यथा ८५

भागमादयध्वमिति पठित्वा उदङ्मुखीभूय श्वासं नियम्य तेनैव यथासुखं परावर्तयन् ॐ अमीमदन्त मातरो यथाभागमावृषा
यिषतेति जपेत् एवमत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति जप्त्वा उदङ्मुखीभूय श्वासं निपम्य तेनैव यथासुखं प
रावर्तयन् अमीमदन्तेत्यादि जपेत् एवमेव मातामहादिपक्षे मन्त्रजपः ततोऽवनेजनावशिष्टजलेन प्रत्यवनेजनं दद्यात्
तत्र क्रमः ॐ अद्यामुकगोत्रे मातरमुकदेवि नान्दीमुख्याभ्युदयिकश्राद्धपिण्डे प्रत्यवनेनिक्ष्व ते नम इति तत्पिण्डोपरि दद्यात्
एवं पितामह्योः प्रपितामह्योश्च तथा ॐ अद्यामुकगोत्र पितरमुकशर्मन् नान्दीमुखाभ्युदयिकश्राद्धपिण्डे ऽत्र प्रत्यवनेनिक्ष्व
ते नम इति पिण्डोपरि प्रत्यवनेजनं दद्यात् एवमेव तत्पि[ण्]डोपरि पितामहादिपञ्चभ्यो दद्यात् ततो नीवीं विस्रस्याचम्य
हीं स्मृत्वा सूत्राण्यादाय ॐ नमो वो मातरो रसायन नमो वो मातरः शोषाय नमो वो मातरो जीवाय नमो वो मातरः स्वधायै
नमो वो मातरो घोराय नमो वो मातरो मन्यवे नमो वो मातरो म[ातरो] नमो वो गृहान्नो मातरो दत्त सतो वो मातरो देष्म एतद्वो मा
तरो वास इति मातॄणां पिण्डत्रयोपरि सूत्रं दद्यात् ततः ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय न
मो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पि
तरो देष्म एतद्वः पितरो वास इत्यनेन पित्रादिपिंडाष्टकोपरि प्रत्येकं सूत्रं दद्यात् ततः कुशत्रयपयवजलान्यादाय ॐ अद्यामुक
गोत्रे मातरमुकदेवि नान्दीमुखि आभ्युदयिकश्राद्धे पिण्ड एतत्ते वासो नम इति सूत्रमुत्सृजेत् ॥ ९ ॥ ९ ॥

एवमेव पितामही प्रपितामहीभ्याम् ॐ अद्यामुकगोत्र पितरमुकशर्मन्नांदीमुखाभ्युदयिक श्राद्धे पिण्डे एतत्तेवासोन
आ म: एवं पितामहादिपंचभ्यः सूत्रं दद्यात् ततो गंधपुष्पधूपदीपतांबूलादिभिः प्रत्येकं पिण्डानभ्यर्च्य ॐ शिवा आपः
८६ संत्विति जलं ॐ सौमनस्यमस्त्विति पुष्पं ॐ अक्षतं चारिष्टमस्त्विति तंडुलान् प्रत्येकं पात्रेषु निक्षिप्य कुशादीन्यादा
य ॐ अद्यामुकगोत्रायामातुरमुकदेव्यानांदीमुख्या आभ्युदयिक श्राद्धे दत्ते तदन्नपानादिभिः प्रीयतामित्यक्षय्यो
दकमुत्सृजेत् एवं पितामह्याः प्रपितामह्याश्चाक्षय्योदकं दद्यात् तथाद्यामुकगोत्रस्य पितुरमुकशर्मणो नांदी
मुखस्याभ्युदयिकश्राद्धे दत्ते तदन्नपानादिभिः प्रीयतामिति पित्रे एवं पितामहादिपंचभ्योऽक्षय्यं दद्यात् ततः ॐ
अघोरा मातरः संत्विति मातृपिण्डत्रयोपरि पूर्वाग्रां जलधारां दद्यात् ॐ अघोराः पितरः संत्विति पित्रादिपिण्डष
ट्कोपरि जलधारां दद्यात् ततः ॐ गोत्रं नो वर्द्धतां दातारो नोभिवर्द्धंतां वेदाः संततिरेव च श्रद्धा च नो माव्यगमद्बहु दे
यं च नोस्तु अन्नं च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः संतु मा च याचिष्म कंचन एताः सत्या आशिषः सं
तु इत्याशिषः प्रार्थयेत् ततः सपवित्रकुशाग्रयाणि प्रत्येकं मात्रादिपिण्डत्रये पित्रादिपिण्डत्रये मातामहादिपिंड राम
त्रये च धृत्वा ॐ ऊर्जं वहंतीरमृतं घृतं पयः कीलालं परिस्रुतम् स्वधास्थ तर्पयत मे मातॄरिति मात्रादिपिण्डोप ८६

रिद्क्षिणाग्रां जलधारां दद्यात् ततस्तथैव ॐ ऊर्ज्जं वहन्तीरित्यादि पठित्वा पित्रादिपिण्डषट्कोपरि जलधारां दद्यात्॥
ततः पिण्डानाघ्राय उत्थाप्य पिण्डाधारकुशानुल्मुकं च वन्हौ क्षिपेत् अर्घपात्राण्युत्तानीकृत्य दक्षिणां दद्यात् दक्षि
णाद्रव्यं च फलमूले फलं मूलं वा प्रत्येकं तच्चक्रमः ॐ अद्यामुकगोत्राणां मातृपितामहीप्रपितामहीनाममुकामुक
देवीनां नांदीमुखीनामाभ्युदयिकश्राद्धसंबंधिनां विश्वेषां देवानां कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वन
स्पतिदैवते यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे एवं पित्रादिश्राद्धसंबंधि विश्वेदेवश्राद्धदक्षि
णां मातामहादिश्राद्धसंबन्धि विश्वेदेवश्राद्धदक्षिणां च दद्यात् ॐ अद्यामुकगोत्राया मातुरमुकदेव्या नांदीमुख्याः
कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फलमूले वनस्पतिदैवते इत्यादि एवं पितामहीप्रपितामह्योरपि ॐ अ
द्यामुकगोत्रस्य पितुरमुकशर्मणो नांदीमुखस्य कृतैतदाभ्युदयिकश्राद्धप्रतिष्ठार्थमिमे फले मूले वनस्पतिदैवते इ
त्यादि एवं पितामहादिश्राद्धदक्षिणां दद्यात् ततः ॐ वाजे वाज इत्यादिना मात्रादिविसर्जनम् ॐ विश्वेदेवाः प्री
यंतामिति देवविसर्जनम् ततो देवताभ्य इति त्रिर्जपः दीपनिर्वापणं आचमनं प्रमादात्त्यादः श्राद्धीयवस्तुप्रतिप
त्तिः॥ इत्याभ्युदयिकश्राद्धपद्धतिः ॐ अथ नित्यश्राद्धप्रयोगः आचम्य उदङ्मुख उपविष्टः ॐ अपवित्रः पवित्रो वा

श्रा सर्वावस्थांगतोपिवायः स्मरेत्पुंडरीकाक्षं सबाह्याभ्यंतरः शुचिरितिपठित्वा ओंपुंडरीकाक्षः पुनात्विति कुशात्रयजलेन
८७ श्राद्धीयद्रव्याणिसिंचेत् ततः कुशाक्षयतिलजलान्यादाय ओंअद्यामुकगोत्राणांपितृपितामहप्रपितामहानाममु
कामुकशर्मणांमातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणांनित्यश्राद्धमहंकरिष्ये इति संकल्पंकु
र्यात् ततस्त्रिर्गायत्रींजप्त्वा ओंदेवताभ्यः पितृभ्यश्चमहायोगिभ्यएवच नमः स्वाहायैस्वधायैनित्यमेवन
मोनमः इतित्रिर्जपेत् ततोऽपसव्यंकृत्वापातितवामजानुर्मोटकतिलजलान्यादाय ओंअद्यामुकगोत्रपितरमुक
शर्मन् नित्यश्राद्ध इदमासनंतेस्वधेतितिलजलप्रोक्षितंमोटकरूपमासनंदक्षिणाग्रंपित्रेदद्यात् एवमेवपिताम
हादिपंचभ्यः प्रत्येकमासनमुत्सृजेत् ओंअपहताऽअसुरारक्षांसिवेदिषदइतिश्राद्धदेशेतिलान् विकीर्य
ओंआयंतुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन्यज्ञेस्वधयामदंतोधिब्रुवंतुतेवंत्वस्मानिति
जपेत् ततः ओंअद्यामुकगोत्रपितरमुकशर्मन् नित्यश्राद्धएतानिगंधपुष्पधूपदीपताम्बूलानितेस्वधाइतियथासं
भवंपित्रेगंधादिदद्यात् एवमेवपितामहादिभ्योप्युत्सृजेत् ततोजलेनमंडलंचतुष्कोणमन्नपात्रस्यचतुर्दिक्षुकृत्वा रामः
ऽन्नपरिवेषणंकुर्यात् ततोमधुदत्वा ओंमधुवाताऽऋतायतेमधुक्षरंतिसिन्धवः माध्वीर्नःसन्त्वोषधीः ओंमधुनक्तमु ८७

तोषसोमधुमत्पार्थिवꣳरजः मधुद्यौरस्तुनःपितामधुमान्नोवनस्पतिर्मधुमाꣳ॥ अस्तुसूर्य्यःमाध्वीर्गावोभवन्तुनः ॐ
मधुमधुमध्वित्यभिमन्त्रयेत ततोन्नपात्रंव्यस्ताभ्यामधोमुखाभ्यांपाणिभ्यांस्पृशन् ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्म
णस्यमुखेऽअमृतेऽअमृतंजुहोमिस्वाहा ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् समूढमस्यपाꣳसुरेइतिजप्त्वा
वामहस्तेनान्नपात्रमत्यजन् ॐकृष्णकव्यमिदंरक्षमदीयमितिपठित्वा ॐइदमन्नं ॐइदमापः ॐइदमाज्य
म् ॐइदंहविरित्यन्नजलघृतेषुपुनरन्नेचदक्षिणांगुष्ठंनिवेश्य ॐअपहताऽअसुरारक्षाꣳसिवेदिषदइत्यन्नो
परितिलान्प्रक्षिप्य मोदकादीन्यादाय ॐअद्यामुकगोत्रपितरमुकशर्मन्नित्सश्राद्धइदमन्नंसोपकरणंतेस्वधाइ
तिपित्रेन्नमुत्सृजेत् एवंपितामहादिभ्यःपंचभ्योप्यन्नमुत्सृजेत् अन्नहीनंक्रियाहीनंविधिहीनंचयद्भवेत् त
त्सर्वमच्छिद्रमस्त्वितिजपेत् ततोदर्भेष्वासीनः ततोगायत्रीम् मधुव्वाताइत्यादिऋचं ॐमधुमधुमध्वितिचजपेत्
ततः ॐकृणुष्वपाजःप्रसितिन्नपृथ्वींयाहिराजेवामवाꣳ॥ इभेनतृष्वीमनुप्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्त
पिष्ठैः तवभ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः तपूꣳष्यग्नेजुह्वापतङ्गानसंदितोविसृजविष्वगुल्काः
२प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः योनोदूरेऽअघशꣳसोयोऽअन्त्यग्नेमाकिष्टेव्यथिराद

धक्षीत् ३ उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्रां ओषतात्तिग्महेते यो नो अरातिं ५ समिधानचक्रे नीचातं धक्ष्यतसन्न शुष्कम् ४ ऊर्द्धो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने अवस्थिराततनुहि जातुजूनां जामिमजामिं प्रमृणीहि शत्रून् अग्नेष्ट्वा तेजसा सादयामि इति रक्षोघ्नीः ऋचः पठेत् ततस्तिलान् भूमौ क्षिप्त्वा ओं उदीरतामित्यादिपितृमन्त्रान् सहस्रशीर्षेत्यादिपुरुषसूक्तं ओं आशुः शिशान इत्यादिकमप्रतिरथम् अन्यानि पवित्राणि यथाशक्ति जपेत् नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे नमः पिनाकहस्ताय वज्रहस्ताय वै नमः इति पठेत् ततः ओं अद्यामुकगोत्राणां पितामहप्रपितामहानाममुकामुकशर्मणां तथाऽमुकगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकशर्मणां कृते तन्निमित्तश्राद्धप्रतिष्ठार्थमेककाकिणीमूल्यकं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे इति मोदकादिना दक्षिणां दद्यात् ततः सव्यं कृत्वा ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च नमः स्वाहायै स्वधायै नित्यमेव नमो नमः इति त्रिः पठेत् ओं प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः इति पठित्वा विष्णुं स्मरेत् नित्यश्राद्धीयमन्नं ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् ॥ इति श्राद्धविवेके उत्तरक्रियापरिच्छेदः ॥ इति श्रीमहामहोपाध्यायश्रीरुद्रधरकृतः श्राद्ध

इतिश्रीश्राद्धविवेकसमाप्तः

यहपोथीशहरबनारसदिवान्हरखापाखानेमेश्राद्धविवेकशिवचरनकेइहांछपी

साकीनमुहल्लेभदैनीकालिमहहकेपास वाःकलमदुर्गामिसिरवोछापनेवालेका

नामबदलवोसोधनेवालेपंडितकानामबच्चामिसिर यहपोथिजिस्कोलेनाहोय
सोचांदनीचौकमेकुंजगलीकेपश्चिमफाटककेतरफरामचरनकेदुकानपरमिलै
गी सम्वत् १९२९ मीः आषाढवदी१५ वारसुक्रकेदिन समाप्तः ७ ॥

